







शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

त्रयोदशखण्डस्य ] १८२९ शाकवैशाखमासस्य [ द्वितीयसंख्या

## मासावतरणिका ।

कर्णे पीयूषधारां किरति किल मुहुः काकली कोकिलानां
मन्दं मन्दं विसर्पञ् शिशिरयति वपुर्दाक्षिणात्यः समीरः ।
श्लिष्टं धत्ते रसालः फलमथ कुसुमैर्मालती भासमाना
चेतः कर्षत्युदारैः परिमलविसरैः प्राणिनां माधवेऽस्मिन् ॥

---

## सुभाषितानि ।

यातायातकुतूहले नयनयोः सीमानमातन्वता
नेत्रान्तं मधुरस्मितेऽधरतलं वाचि प्रियस्य श्रुतिम् ।
चित्तस्यापि गतागतेषु विधिना कान्तप्रतीकावलीं
मन्दाक्षप्रसरे कुलाम्बुजदृशां नाकारि सीमा कुतः ॥

दिग्वासा यदि तत्किमस्य धनुषा सास्त्रस्य किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिराऽवनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

जम्बूनां कुसुमोत्करे नवमधुन्यारब्धपानोत्सवाः
कीराः पक्वफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।
एतेषामपि नीलकिंशुकदलैरेभिः समानत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु कीराङ्गनाः ॥

# वङ्गीयप्रवादानुवादाः।

( पूर्वतोऽनुवृत्ताः )

| | |
|---|---|
| १५४ अजा कचा बुडा मेष दुधिर अद्य घोलेर शेष । हाँसेर तला ब्केर गला मुर्गीर राण कबुतरेर सब खान। | अजो युवाऽऽद्यं दधि वृद्धमेषो हंसोदरं क्रुङ्गलतक्रशेषौ । सर्वः कपोतः कृकवाकुपक्षस्तत्तद्विदः स्वादु वदन्ति भक्ष्यम् ॥ |
| १५५ मध्य मासे संक्रान्ति | मध्यतो मासि संक्रान्तिः । |
| १५६ कत रवि ज्वरे रे केवा आंखि मेले रे | ज्वलन्ति कति सूर्या रे क उन्मीलति चाक्षि रे । |
| १५७ दि ओ किंचित्, ना करि ओ वंचित । | ददस्व किञ्चिन्न कुरुष्व वञ्चितम् । |
| १५८ पार गाये गाजि, तार कथा फजि। | शाटी गात्रे यस्य तथा प्रोच्चैस्तिष्ठति तत्कथा। |
| १५९ बामुनेर आगे हाट्ले निर्वंशे पाछे हाट्ले ओ निर्वंशे । | निर्वंशेत्यग्रगे विप्रा निर्वंशेत्यपि पृष्ठगे। |
| १६० पागलेर गोवधे आनन्द। | क्षिप्तानां गोवधे हर्षः । |
| १६१ अति उच्च हइ ओ ना वातासे फेलिवे, अति नीचु हयो ना व्याङे ओ डिङ्गि वे। | माऽत्युच्चको भूः पवनो हि पातयेन्मा नीचको वा प्लवको हि लङ्घयेत्। |
| १६२ नाइ देशे भेरण वृक्ष। | निरस्तपादपे देश एरण्डोऽपिद्रुमायते। |
| १६३ दाताय धन बाँटे, वखिलेर बुक फाटे | दाता दत्ते धनं वक्षः पाटयते कृपणस्य तु। |
| १६४ ये धरे छे सेत गेछे इ, ढाकि भाइ सावधान। | यो धर्ता स गतो न्यूनं ढाक्किकास्व समाहितः। |
| १६५ तुइ भाल तार वापू पुत खेको। | त्वं भद्रोऽसि ध्रुवं किन्तु वप्रस्ते पुत्रखादकः। |
| [illegible] अन्न वाशने इ तालेर ग्रास | अन्नप्राशनमात्रेण तालवद्ग्रास इष्यते। |

( क्रमशः )

१ क्रुङ्ग बकविशेषस्तस्य गलस्तक्रशेषश्च तौ ।

# श्रीमान् रत्नखेटदीक्षितः ।

( पूर्वतोऽनुवृत्तः )

अथेदानीं समुपहृत्य कविप्रवीरस्यास्य भैष्मीपरिणयचम्पूगतानि सहृदयहृदयापहारचतुराणि कियन्तिचिद् गद्यानि पद्यानि च प्रबन्धमेनमुपसंहर्तुमिच्छामः । तत्रेदमादिमं पद्यम्—

**यस्योपवीतगुण एव फणावृतैक-**
**वक्षोरुहः कुचपटीयति वामभागे ।**
**तस्मै ममास्तु तमसामवसानसीम्ने**
**चन्द्रार्धमौलिशिरसे महसे नमस्या ॥ इति ।**

प्रियपाठकमहाभागाः ! यथा किल निसर्गत एव हृदयहारिणी समधिकमेव समाकर्षत्यन्तरङ्गं रसविदां सुव्यवस्थं विनिवेशितैः समुज्ज्वलतमैरलङ्कृतिजालैर्निरन्तरमेव निचिता वनिता एवं ननु कविताऽप्यमुष्य कविप्रकाण्डस्य प्रकृत्यैव मनोरमा समाहरति शाब्दैरार्थैश्च तैस्तैरलङ्कृतिजालैः सचेतसां चेतः । नापि विजहात्यंशतोऽप्यौदार्यम् । दीयतां तावदुपरिनिर्दिष्टे पद्ये सानुग्रहा दृष्टिर्महाभागैः । पद्येन खल्वनेन समुपवर्ण्यते निखिलभुवनभावनो भगवानर्धनारीनटेश्वरः श्रीशम्भुः । नागयज्ञोपवीतश्चायं भगवान् । युज्यते च वामस्कन्धमवलम्ब्य वर्तमानस्य श्रीशिवयज्ञोपवीतभूतस्य पन्नगाधिपतेः फणया पार्वतीमयस्य वामार्धस्य स्तनावरणमिति निपुणं तावद्विचिन्त्यतां सहृदयधौरेयैः । अत्र च कुचपटीयतीत्युपमा । तमसामवसानसीम्न इत्यत्र च चन्द्रार्धमौलिशिरसे महस इत्यस्य हेतुभूततया पदगतहेतुकं काव्यलिङ्गम् । कस्य नाम नाल्हादयेच्चेतो रसिकस्यात्रोपवर्ण्यमानं वस्तु ।

सहृदयाः ! संग्रथ्यन्ते किल समासादितकाव्यग्रथनकौशलैः श्लिष्टानि काव्यानि । श्लेषश्च नाम शाब्द आर्थश्चेति द्विविधः । आद्यस्तु नानाविधोऽपि सभङ्गश्चाभङ्गश्चेति प्राधान्यतो द्विविधः । विरलाः किल सभङ्गश्लेषसमलङ्कृतानां काव्यानां प्रणेतारः कवयो विरलतमाश्च वचनभङ्गवता श्लेषेण समुद्भासितानां काव्यरत्नानां निर्मातारः । श्रीमतः पुना रत्नखेटदीक्षितस्य लीलामात्रमेवेदमे-

र्वविधानां श्लिष्टकाव्यानां प्रणयनं नाम । विलोक्यतां तावत्पद्यमिदं रसिकैः । यथा—

ललितगमना नार्यो राजन्मनोजनितान्तभाः
सुरतिसदृशस्ताः सन्मुख्यो भवानपि तद्वद्बुध ।
वनभुवमितो गेहादेको न गच्छतु मां बिने-
त्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥

अत्र च प्रथमेऽर्थे भगवतः श्रीकृष्णस्य च बल्लवीनां च साधर्म्यमुपवर्ण्यते । श्लेषानुप्राणितं चैतत् । अत्र च ललितगमना इत्यादयः शब्दास्तथोपनिबद्धा यथैते सभङ्गश्लेषमर्यादया स्त्रीस्वरूपं पुरुषलक्षणं चार्थमत्रबोधयितुं प्रभवेयुः । पदानि चैतानि पुंसि प्रथमैकवचनान्तानि स्त्रियां च तद्बहुवचनान्तानि । अस्य च पद्यस्यायमर्थः । ललिते रतिचेष्टिते गच्छति मनो यस्य तथाविधः । अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । इत्युक्तेः । यद्वाऽत्र सुकुमारतयाङ्गानां विन्यासो ललितं मतमित्युक्तलक्षणो ललिताभिधानो नायिकायाः स्वाभाविकोऽलङ्कारो ग्राह्यः । यत्त्वत्र ललितं गं गानं तत्र मनो यस्येति व्याख्यानं तदेतत्प्रकृतार्थपरिपोषकत्वाभावाद्धेयम् । बल्लव्योऽपि ललितगमना ललितं हि तासां गमनमिति । पुनश्च भवान् ( श्रीकृष्णः ) राजन्मनोजनितान्तभाः राजतो मनोजस्य मदनस्येव नितान्तमत्यन्तं भाः कान्तिर्यस्य मदनवत्सुन्दर इत्यर्थः । तास्तु राजता मनसि दीप्यमानेन मनोजेन तान्ता म्लानीकृता भा कान्तिर्यासां तथाभूताः । भवान् सुरतिसदृशः शोभनायां रतौ क्रीडायां संभोगलक्षणायां सदृशो योग्यः । ता अपि शोभनायाः रत्याः कामवनितायाः सदृशः समानाः सौन्दर्यातिशयशालिन्य इत्यर्थः । भवान् पुनः सन्मुख्यः सत्सु प्रधानः । ताश्च शोभनं मुखं यासां तथाभूताः । तत् तस्मात् यतो ललिते भवन्मनो गच्छति ताश्च सुकुमारपदन्यासतया ललितविशिष्टा इति गच्छेदेव तासु ते दृष्टिः । ततश्च मदनबाधया क्रान्तास्ता मनोजसदृशं त्वामीहेरन् इत्यादितो हेतोरिति भावः । समुन्नीयतामन्यन्निपुणप्रज्ञैः ।

अथेदानीं विचार्यते कीदृशीं वा काव्यरचनां बहुमन्यतेऽयं कविप्रकाण्ड इति । तथा ह्युक्तमेतेन ।

**भ्रमरहिता सा कचवत्स्त्रीणां कुचवच्च सरसहिता ।**
**लसदक्षरपीयूषाऽधरवत्कविता महात्मनां जीयात् ॥ इति ।**

कविता स्त्रीणां कचवत् केशवत् भ्रमरहिता । केशा हि विलासिनीनां सुरभिकुसुमगर्भिता भवन्तीति युज्यत एव सौरभ्यलुब्धानां भ्रमराणां हितावहत्वमेतेषाम् । कविता च महात्मनां भ्रमेण रहिता भवति । किं चासौ कुचवत् सरसहिता भवति । कुचौ हि सरेण कण्ठत आनाभिमूलमालोलता मालाविशेषेण सहितौ । कविता पुनः सरसानां रसिकानां हिता । अपि चेयमधरवल्लसदक्षरपीयूषा । अधरो हि नारीणां लसत् अक्षरमविनाशि पीयूषं यस्यैवंविधो भवति । स्त्रीणां खल्वधरे सुधारसो भवतीति कवीनां समयः । कविता तु लसत् अक्षराणि कखादयो वर्णा एव पीयूषं यस्यां तथाविधा भवतीति ।

एवं—

**श्लिष्टा सभङ्गा सद्वर्णा निर्दोषा सद्गुणा मृदुः ।**
**नानाभङ्गीविलासा चेत्कृतिर्विकृतिरन्यथा ॥ इति ।**

उपनिबद्धं च पद्यमिदं प्रबन्धस्यास्य शीर्षकेऽस्माभिः । अपरमप्यवलोक्यतां कविनाऽनेन कृतं वाचो वर्णनं प्रियमहाभागैः । यथा—

**सर्वालङ्कारयुक्तापि न श्लिष्टा वनितेव सा ।**
**वाणी मनोजातसुखं प्रौढानां न तनोति हि ॥ इति ।**

श्लिष्टा श्लेषयुक्ता परिरब्धा च । मनोजातसुखं मनसि जातं सुखं मदनसुखं च । प्रौढाः संजातपरिणयाः प्रगल्भाश्च । स्पष्टमन्यत् ।

एतावता शक्येत रसिकैरवबोद्धुं कविताविषये कविप्रकाण्डस्यास्याभिप्रायः । भवतु वा यदृच्छयाऽऽस्तां वा कामतः किन्तु कवेरस्य पद्यानि कियन्तिचित्प्राचीनकविकाव्यैः समं संवदतीव । यथा—

**मीलयन् पुण्डरीकाणां कुलं भूपशिरोमणिः ।**
**तदा संवर्धयामास राजत्वं देवकीसुतः ॥ इति ।**

अत्र च राजत्वपरिपोषणे पुण्डरीककुलमीलनं हेतुतयोपनिबध्यते । श्लिष्टश्चायं

राजशब्दो भूपतिचन्द्रश्चेत्यर्थद्वयवाचित्वात् । चन्द्रश्च पुण्डरीकाणां सूर्यविकासिनां कमलानां मीलनं सङ्कोचं करोति । चन्द्रकरसम्पर्कतस्तेषां निमीलनदर्शनात् । राज्ञा पुनर्वासुदेवेन पुण्डरीकाणां व्याघ्राणां कुलं निमीलितम् । एतच्च वर्णनं कविकुञ्जरस्य श्रीमतोऽनन्तभट्टस्य चम्पूभारतीयं

**चन्द्रहासपतनं चकार यत्पुण्डरीकनिवहेषु मीलनम् ।**

इति पद्यार्धस्य च्छायामिवोपजीवत्संलक्ष्यते । कथमन्यथैतत्पद्यगतौ पुण्डरीकमीलनशब्दावेव कवेरस्य निर्दिष्टपूर्वे पद्ये प्रादुःष्याताम् । किं च चम्पूभारत इवात्रापि मृगयाविहारप्रसङ्गत एवोपनिबद्धोऽयमर्थ इत्यपि न प्रस्मरणीयम् ।

एवं —

**त्वन्नगतनया ह्यहमपि निर्जरपञ्चाननो हि तव कान्तः ।**
**मामपि योजय पार्वति तव नाथसदृग्गुणेन कृष्णेन ॥ इति ।**

पद्यमिदमनुरूपवरप्रार्थिन्या रुक्मिण्या विहितायाः श्रीमद्भवानीप्रार्थनायाः सादृश्यात्स्मारयति निगूढार्थतयातिमात्रमनोहरं

**उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।**
**अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥**

इति नागानन्दीयं पद्यम् ।

अत्र च प्रबन्धे माधवमेव वसन्तसमयोपमानतयोपनिबध्नन् कविरयं मालतीमाधवीयपात्राणां नामान्युदलेखीत् । यथा—

**ततश्चैवमुपश्लोकिते शिशुपाल आलम्बितमौने भूपे यातेषु केषुचिद्दिवसेषु कदाचित्कमलवदनोल्लसन्मकरन्दरसः सकलहंसानन्दप्रथमावतरणं ललितलवङ्गिकाप्रणयभूमिर्विरचितबकुलमालाविभवोऽपहृतमालतीमानो माधव इव वसन्तसमयः समाजगाम ॥ इति ।**

( क्रमशः )

---

# प्राचां भूगोलविज्ञानम् ।

( पूर्वतोऽनुवृत्तम् )

उपवर्णनतश्चास्मादेतदवगम्यते यदयं किल प्रदेशं परितः प्रदक्षिणक्रमेण परिभ्रमतः सूर्याचन्द्रमसौ यत्र च षाण्मासिको दिवसः षाण्मासिकी च रात्रिः सोऽयमुत्तरध्रुवप्रदेश इति । मेरुरपि नन्वयमस्माभिरुपवर्ण्यमान इत्थंविध एव । एवमेव ह्यसावुपवर्ण्यते प्राचीनैः । तथा हि । महाभारते वनपर्वणि द्वाषष्ट्युत्तरशततमेऽध्याये युधिष्ठिरं प्रति धौम्यः—

उदीचीं दीपयन्नेष दिशं तिष्ठति वीर्यवान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः ॥

यस्मिन्ब्रह्मसदश्चैव भूतात्मा चावतिष्ठते ।
प्रजापतिः सृजन्सर्वं यत्किञ्चिज्जङ्गमागमम् ॥

यानाहुर्ब्रह्मणः पुत्रान्मानसान् दक्षसप्तमान् ।
तेषामपि महामेरुः शिवं स्थानमनामयम् ॥

अत्रैव प्रतितिष्ठन्ति पुनरत्रोदयन्ति च ।
सप्तदेवर्षयस्तात वसिष्ठप्रमुखास्तदा ॥

देशं विरजसं पश्य मेरोः शिखरमुत्तमम् ।
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः ॥

* * * * * * * *

एनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवम् ।
प्रदक्षिणमुपावृत्य कुरुतः कुरुनन्दन ॥

ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः ।
परियान्ति महाराज गिरिराजं प्रदक्षिणम् ॥

एवं ज्योतींषि सर्वाणि प्रकर्षन् भगवानपि ।
कुरुते वितमस्कर्मा आदित्योऽपि प्रदक्षिणम् ॥ इति

मात्स्येऽपि पञ्चनवतितमेऽध्याये—

परिमण्डलस्तयोर्मेरुर्मध्ये कनकपर्वतः ।

इत्युपक्रम्य—

तत्र देवगणाः सर्वे गन्धर्वोरगराक्षसाः ।
शैलराजे प्रमोदन्ते सर्वतोऽप्सरसस्तथा ॥

स तु मेरुः परिवृतो भुवनैर्भूतभावनैः ।
यस्येमे चतुरो देशा नानापार्श्वेषु संस्थिताः ॥

भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे ।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ॥

नारसिंहेऽपि—

मध्ये पृथिव्यामद्रीन्द्रो भास्वान्मेरुर्हिरण्मयः ।

इत्यारभ्य स्वर्गविशेषाभिधानोत्तरं

एकविंशत्यमी स्वर्गा निविष्टा मेरुमूर्धनि ॥ इति ।

अत्रापि भगवतोः सूर्याचन्द्रमसोर्मेरुं परिक्रम्यैव भ्रमणमभिधीयते । अभिधीयते च तत्रैव स्वर्लोकावस्थानम् । प्रतिपाद्यते च भद्राश्वादीनां देशानामेनं परितश्चतुर्दिक्ष्ववस्थानम् । न खलूपवर्णनमेतद्विनोत्तरध्रुवमन्यत्र संगच्छते । तेन ह्यादित्य आत्माधिष्ठितं प्रदेशं प्रदक्षिणीकुर्वाण आलोक्येत यः किल ध्रुवमौत्तरमधितिष्ठेत् । उदगुन्नतो ह्ययं भूपिण्डः । अस्य च निरक्षप्रदेशसान्निहित एव भागे वयं निवसामः । भानुरप्यात्मनः क्रान्तिवृत्ते परिभ्रमति । क्रान्तिवृत्तं चैतदाक्रम्यैव निरक्षप्रदेशं वर्तमानमपि न हि निरक्षप्रदेशादुदीच्यां च दक्षिणस्यां च सार्धत्रयोविंशत्यंशेभ्यः परमुपयाति । ततश्च तत्रैव परिभ्रमतो भानोरपि न तदूर्ध्वे गतिः संभवति । क्रान्तिवृत्तं चैतन्न सरलमपि तु तिर्यगिति भानोरपि गतिस्तिर्यगेव संदृश्यते । एवं च निरक्षप्रदेशे वर्तमानैरात्मन उपर्येव वीक्ष्यते भगवानादित्यः । यथा यथा चातिक्रम्य निरक्षं प्रदेशमुत्तरत्रोपगच्छेन्मनुजस्तथा तथाऽयमधोऽध एव वर्तनो विलोक्येतैतेन । एवं च प्रतिगच्छन्यदायं पथिको निरक्षप्रदेशतोऽतिक्रम्य सार्धत्रयोविंशतिमंशानुदीच्यां गच्छेत्तदा किलानेनात्माधिष्ठितप्रदेशस्याधस्तादेव निभाल्येत भगवान् सहस्रकरः ।

( क्रमशः )

समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते । यानि च यद्रूपसमनुगतानि तानि तत्स्वभावव्यक्तकारणकानि यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम् । ( ७ ) ॥ १९ ॥

॥ इति पञ्चदशकारिका ॥

---

## षोडशी कारिका ।

अव्यक्तं साधयित्वा अस्य प्रवृत्तिप्रकारमाह ( १ )

**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।**
**परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥१६ (२)**

---

रणाङ्गीकारे विश्रामविरहेण क्वापि निराकाङ्क्षकार्यप्रत्ययो न स्यात् इत्यनवस्थादोष आपद्येत । भिद्यन्ते विक्रियन्त इति भेदा विकारा बुद्ध्यादिविशेषा इत्यर्थः । ये विकारा यदन्वितास्ते तत्प्रकृतिकाः । घटादिविकाराणां मृदाद्यन्विततया मृदादिप्रकृतिकत्वं दृष्टम् । अत्रायं प्रयोगः । सर्वं कार्यजातं सुखदुःखमोहात्मकवस्तुप्रकृतिकं तदन्वितत्वात् । घटादिवत् । समन्वयं प्रकाशयति भिन्नानामिति । नानाविधानां पदार्थानामित्यर्थः । समानरूपता स्वरूपता एककारणकता । हेत्वसिद्धिं परिहरति सुखदुःखेति । भेदानां बुद्ध्यादीनामित्यर्थः । सिद्धं निश्चितमवधारितम् ।

इति पञ्चदशकारिकाव्याख्या तत्त्वसुधा ।

---

(१) अव्य—माह । अव्यक्तं प्रधानं मूलकारणम् । अस्य अव्यक्तस्य । प्रवृत्तिप्रकारं परिणामव्यापारम् ।

( २ ) कार—शेषात् । कारणं मूलकारणं अव्यक्तं प्रधानं अस्ति विद्यते । तच्च त्रिगुणतः प्रलये सदृशपरिणामेन प्रतिप्रतिगुणाश्रयविशेषात् । गुणो गुणः प्रतिगुणं तत्र य आश्रयः सहकारित्वं इति प्रतिगुणाश्रयः प्रतिगुणाश्रयः प्रतिगुणाश्रय इति पुनरव्ययीभावः । तस्मिन् विशेषः प्राधान्येन एकैकगुणावलम्बाद्यद्वैचित्र्यं तस्मात् । सलिलवत् जलमिव परिणामतः अन्यथाभावात् । समुदयाच्च सृष्टौ महदादिभावेन प्रवर्तते परिणमत इत्यर्थः ।

प्रतिसर्गावस्थायां सत्त्वं च रजश्च तमश्च सदृशपरिणामानि भवन्ति। परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते। तस्मात्सत्त्वं सत्त्वरूपतया रजो रजोरूपतया तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते तदिदमुक्तं त्रिगुणत इति। प्रवृत्त्यन्तरमाह समुदयाच्चेति। समेत्य उदयः समुदयः समवायः। स च गुणानां न गुणप्रधानभावमन्तरेण संभवति न गुणप्रधानभावो वैषम्यं विना न च वैषम्यमुपमर्द्योपमर्दकभावादृत इति महदादिभावेन प्रवृत्तिर्द्वितीया। (३)

स्यादेतत् कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिरत आह परिणामतः सलिलवदिति। यथा हि वारिदमुक्तमुदकमेकरसमपि तत्तद्भूमिविकारानासाद्य नारीकेरतालीविल्वचिरविल्वतिन्दुकामलकप्राचीनामलककपित्थफलरसतया परिणा-

---

(३) प्रति–तीया। प्रतिसर्गावस्थायां अकार्यावस्थायां प्रलयावस्थायामित्यर्थः। सदृशेति। सदृशः परिणामो येषां तानि स्वस्वरूपेण परिणतानीत्यर्थः। अत्र हेतुमाह परिणामेति। परिणामः अवस्थान्तरप्राप्तिः स्वभावो येषां ते। परिणमनशीला इत्यर्थः। हिशब्दो यस्मादर्थे। गुणाः सत्त्वादयः। क्षणमपीत्यपिशब्देन न केवलं चिरमिति द्योत्यते। येषां परिणामादृते क्षणमप्यवस्थितिरसंभविनी तेषां का कथा चिरस्येति भावः। उपसंहारव्याजेन सदृशपरिणामप्रकारं द्योतयति तस्मादिति। परिणाममन्तरेणावस्थानविरहादित्यर्थः। प्रतिसर्गावस्थायामपि प्रलयावस्थायामपि। न केवलं सर्गावस्थायामित्यपिशब्देन द्योत्यते। प्रवर्तते परिणमते। अवस्थाद्वये परिणाममात्रेणैव साम्यं न त्ववान्तरभेदेनेति स्मर्तव्यम्। परिणामस्य सार्वकालिकत्वेऽपि सर्गावस्थायां सदृशः प्रलयावस्थायां विसदृशः परिणाम इति विशेषः। प्रवृत्त्यन्तरं गुणत्रयस्यान्यरूपां प्रवृत्तिम्। समेत्य मिलित्वा उदयः कार्यजननम्। समवायः कार्योत्पादनोन्मुखीभावः। सः समवायः। न संभवतीत्यत्रान्वितम्। गुणानां सत्त्वरजस्तमसाम्। गुणप्रधानभावमङ्गाङ्गिभावमप्रधानत्वं प्रधानत्वं चेत्यर्थः। अन्तरेण विना। वैषम्यं न्यूनातिरिक्तत्वम् असदृशबलं वा। न संभवतीति पूर्वेणान्वयः। एवमुत्तरत्र। उपमर्द्योपमर्दकभावात् आश्रयाश्रयिभावात्। एकस्य दौर्बल्यादपरस्य प्राबल्यादित्यर्थः। प्रवृत्तिः विसदृशप्रवृत्तिः।

(४) स्यादे–त्यर्थः। शङ्कते स्यादेतदिति। द्विविधप्रवर्तनं भवत्वित्यर्थः। एकरूपाणां एकविधानां गुणानां सत्त्वादीनां एकस्य प्रधानस्येत्यर्थः। अनेकरूपा बहुप्रकारा प्रवृत्तिः विचित्रकार्यपरिणतिरित्यर्थः। अत्र दृष्टान्तमाह यथेति। वारिदात् मेघात् मुक्तं च्युतं पतितं उदकं जलं वृष्टिसलिलमित्यर्थः। एको रसो मधुरलक्षणो यस्य तथाविधमपि। न केवलं

मान्मधुराम्लतिक्तकटुकषायतया विकल्पते एवमेकैकगुणसमुद्भवात्प्रधानं गुणमाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्तयन्ति । तदिदमुक्तं प्रतिप्रतिगुणाश्रयविशेषादिति । एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थः ।।( ४ ) ।। १६ ।।

इति षोडशकारिका।

---

## सप्तदशी कारिका।

---

येे तु तौष्टिका अव्यक्तं वा महान्तं वा अहङ्कारं वा इन्द्रियाणि वा भूतानि वा आत्मानं मन्यमानास्तान्येवोपासते तान्प्रत्याह । ( १ )

**संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।**
**पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ( २ )**

---

भिन्नरसमित्यपिशब्देन द्योत्यते । तत्तद्भूमिविकारान् नारिकेरादिरूपान् आसाद्य तत्रस्थं तद्रूपेण परिणतं वा सदित्यर्थः । चिरबिल्वं करञ्जफलम् । तिन्दुकं गाब इति यस्य ख्यातिः । आमलकं आमडा इति यस्य भाषा । प्राचीनामलकं पानीयामला इति ख्यातम् । कपित्थं कदवेल इति भाषा । विकल्पते परिणतं भवति ।। दार्ष्टान्तिके योजयति एवमिति उक्तवदित्यर्थः । जीवानामदृष्टतः एकैकस्य गुणस्य समुद्भवात् उद्रेकात् प्राधान्येनाविर्भावात् । अप्रधानगुणा इति बहुत्वविवक्षया बहुवचनम् । अन्यथा गुणत्रयाणामेकस्य प्राधान्येन द्वयोरेवावस्थानात् द्विवचनस्यैव प्राप्तिरिति । परिणामभेदान् नानाविधपरिणामान् महदादिरूपपरिणामविशेषान् प्रवर्तयति जनयति । एकैकगुणाश्रयेण एकैकगुणावलम्बनेन । विशेषो वैचित्र्यम् । गुणभेदेन सहकारिभेदेन वैषम्यभेदेन वा विचित्रपरिणाम इति भावः ।

इति षोडशकारिकाव्याख्या तत्त्वसुधा ।

---

( १ ) ये तु–त्याह । तौष्टिकाः तुष्टिः प्रयोजनं येषां तुष्ट्या चरति वार्थे तुष्टिशब्दात् ष्णिकः । विषयव्यापृता अल्पलाभेन कृतार्थम्मन्याः । एषां तौष्टिकत्वमेवोपपादयति अव्यक्तं वेति । प्रत्येकं प्राधान्यख्यापनाय प्रत्येकं वा शब्दः । अभिमन्यमाना जानन्तः अव्यक्तादिषु आत्मत्वमध्यारोपयन्तः । तान्येव अव्यक्तादीन्येव चिदात्मव्यवच्छेदार्थ एवकारः । उपासते सेवन्ते ध्यायन्ति । तान् तौष्टिकान्प्रत्याह प्रतिजानीते जडसमूहेभ्यो भिन्न आत्मास्तीति प्रतिपादयति ।

( २ ) संघा–तेश्च । पुरुषः अव्यक्तादेर्व्यतिरिक्त आत्मा अस्ति विद्यते । कुतः । संघातपरार्थत्वात् । संघातानां मिलितानां संभूयकारिणां अनेकवस्तुघटितानां परार्थत्वात् केवलपरप्रयोजनसाधकत्वात् ( प्रयोजके पञ्चमी न तु हेत्ववयवे) तथा च

पुरुषोऽस्त्यव्यक्तादेर्विविक्तः । कुतः । संघातपरार्थत्वात् । अव्यक्तमहदहङ्कारप्रभृतयः परार्थाः । सङ्घातत्वात् । शयनासनाभ्यङ्गवत् । सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे संघाताः । ( ३ )

स्यादेतत् शयनासनादयः संघाताः संघातशरीराद्यर्थाः दृष्टा न तु आत्मानं व्यक्ताव्यक्तव्यतिरिक्तं प्रति परार्थाः तस्मात्संघातान्तरमेव परं गमयेयुः न त्वसंघातमात्मानमित्यत आह त्रिगुणादिविपर्ययात् । अयमभिप्रायः संघातान्तरार्थत्वे हि तस्यापि संघातत्वात्तेनापि संघातान्तरार्थेन भवितव्यमेवं तेन

---

संघातानां परार्थत्वसांसिद्धौ धर्मिग्राहकमानेन पुरुषसिद्धिरिति । एवमुत्तरत्रापि । त्रिगुणादिविपर्ययात् त्रिगुणादीनां सुखादीनां विपर्ययात् अभावतः असंघातपुरुषसिद्धेरुपयोगितया एतस्याः पञ्चम्याः प्रयोगः । अधिष्ठानात् संनिधानात्मकसंबन्धविशेषात् । अधिष्ठानमन्तरेण नाधिष्ठानं नाधिष्ठीयमानं वा संभवतीति यः प्रकृत्यादीनामधिष्ठाता पुरुष इति । भोक्तृभावात् । भोक्तृत्वात् । महदादीनां भोग्यत्वं भोक्तारमन्तरेण न सिध्यतीति भोग्यातिरिक्तो यो भोक्ता स पुरुष इति । कैवल्यार्थं मोक्षार्थं प्रवृत्तेश्च महर्षीणां शास्त्राणां चेति शेषः । यस्य कैवल्याय महर्षीणां शास्त्राणां च प्रवृत्तिः स पुरुष आत्मेति ।

( ३ ) पुरु—घाताः । प्रतिज्ञातं विवृणोति पुरुष इति । अव्यक्तादेरित्यादिना अहंकारादिसंग्रहः । हेतुमाह संघातेति । संघातानां संभूयकार्यकारिणां अनेकवस्तुघटितानां परार्थत्वं परप्रयोजनसाधकत्वं तस्मात् । अनुमानमाह अव्यक्तेति । अव्यक्तं च महांश्च अहंकारश्च ते आदयो येषां ते । परार्थाः पराभीष्टसाधकाः । अव्यक्तादयः पक्षः परार्थत्वं साध्यं संघातत्वादिति हेतुः शयनासनाभ्यंगादिदृष्टान्तः । अभ्यंगस्तैलादिः । नन्वव्यक्तादावपि संघातत्वरूपहेतुसिद्धौ किं मानमित्याशंक्यानुमानेन हेतुं साधयति सुखदुःखेति । अव्यक्तादयः संघातत्ववन्तः सुखदुःखमोहात्मकत्वात् । यन्नैवं तन्नैवं यथा पुरुषः ।

( ४ ) स्यादे—स्माभिः । स्यादेतदिति अव्यक्तादीनां संघातत्वेन परार्थत्वं स्यादित्यर्थः । दृष्टाः लोके साक्षात्कृताः । संघातशरीराद्यर्थकाः शयनादय इव संघाताव्यक्तादयः संघातात्मपरेष्टसाधका भवेयुः न तु असंघातस्य परस्य इष्टसाधका इत्याशंकार्थः । आसनादय इत्यादिपदादभ्यङ्गादिसंग्रहः । व्यक्तं चाव्यक्तं च ताभ्यां व्यतिरिक्तं भिन्नम् । शरीरं पञ्चभूतात्मकमिति संघातः । उपसंहरति तस्मादिति । शयनादीनां शरीराद्यर्थत्वेन व्यक्ताव्यक्तातिरिक्तार्थत्वविरहात् संघातानां संघातान्तरार्थत्वेन दृष्टत्वादिति वार्थः । परं अन्यम् अन्यः संघातः संघातान्तरं तमेव गमयेयुः बोधयेयुः । एवकारव्यवच्छेद्यमाह न त्विति । त्रिगुणादीति । त्रिगुणमव्यक्तं आदिपदात्

॥ श्रीश्रीदुर्गा शरणम् ॥

# कालवैचित्र्यम् ।

सखीयन्ती[1] प्रातः सुखयति सुहासा कमलिनी
तिरस्यन्ती[2] तारा भवति मलिना दुःखनिलया ॥
मधूयन्ती[3] धावत्यपि मधुलिहां संहतिरलं
विचित्रं नामैतन्ननु जयति कालव्यवसितम् ॥ १ ॥

सुखीयन्तः सौख्यं चिरमिह न यन्ति क्षणमपि
परं दीनायन्ते धनमभिलषन्तोऽपि सुधियः ।
महापुत्रीयन्तः सुतमपि लभन्ते जडतमं
विचित्रं नामैतन्न० ॥ २ ॥

विपद्यन्ते केचिज्जगति कुणपा[4] भूमिवलये
परेऽन्त्येष्टिं याता मलयजधृताद्यैः सुकरणैः ।
क्वियत्प्लुष्टास्त्यक्ता अपि शुनकजग्धाश्च कतिचिद्
विचित्रं नामैतन्न० ॥ ३ ॥

प्रसेवन्ते केचिज् जननमिह पित्रोः सुखकरं
म्रियन्ते वा क्षिप्त्वा कति च पितरौ शोकजलधौ ।
मृतायन्ते दुःशासनतमतया दुःसहरुजां
विचित्रं नामैतन्न० ॥ ४ ॥

क्वचिद्धैमे गेहे सुपटमुपसंव्यानमशनं
पयोमध्वाज्याक्तं तृणविरचितं नक्तकमहो ।
परोच्छिष्टं[5] नाम क्व च ननु कुतश्चित्तदपि नो
विचित्रं नामैत० ॥ ५ ॥

दृशा वा केषाञ्चिन्नशितमिह जन्मप्रभृतितः
पदा वा केषाञ्चित् पुनरसुभृतां खञ्जितमलम् ।
अहो केषांचिद्वा विकलितमशेषैरवयवै-[6]
र्विचित्रं नामैतन्ननु ० ॥ ६ ॥

---

१ सखायमिच्छन्ती । २ अन्तर्धानमिच्छन्ती । ३ मध्विच्छन्ती । ४ शवाः ।
५ नष्टं । ६ इन्द्रियैः ।

शताब्दं पञ्चाशत्कति कति शताच्चाधिकमपि
त्रयोविंशत्यब्दं कति च ननु जीवन्ति जगति।
दशाब्दं पञ्चाहं कति च कति तन्न्यूनसमयं
विचित्रं नामैतन्नतु० ॥ ७ ॥

महाराजा लोके कति च कतिशो मन्त्रिकुशलाः
नियन्तारोऽध्यक्षाः कति च कतिशः कर्मसचिवाः।
प्रजा वा सेना वा कति च कति वध्याश्च वधका
विचित्रं नामैतन्न० ॥ ८ ॥

क्वचित्संपूज्येते मलयजसुपुष्पैः पितरकौ
क्वचिद्वाऽऽराध्येतेऽवकरकणजालेन[1] तनयैः।
क्वचिद् वा ताड्यन्ते जनकजननीभ्यामपि सुता
विचित्रं नामैतन्नतु० ॥ ९ ॥

निशानाथादित्यावनुपलमसू जंगमतमौ
महीध्राः स्थेयांसः क्षयमवधिकृत्यैव जगताम्।
शरीरी नामास्मिञ्जनिमरणशाली प्रतियुगं
विचित्रं नामैतन्न० ॥ १० ॥

निरर्थं वा केचिद्विदधति परानिष्टमनिशं
परे प्राणत्यागो वरमिति यतन्ते परकृते।
कति भ्रान्तस्वान्ताः स्वयमपि सुखद्वेषनिरता
विचित्रं नामैतन्न० ॥ ११ ॥

अहंकारी कश्चिद्भुवनतृणमानी प्रभवति
तृणम्मन्यः कश्चित् कलयति समुत्कृष्टमखिलम्।
परोऽन्यस्मा ईर्ष्यापरतरतयाऽसूयति सदा
विचित्रं नामैतन्न० ॥ १२ ॥

---

१ मार्जनीरजः।

पुरा भूपः स्तौति क्व च परमिदानीं परिचरं
क्व वा राजेन्द्रोऽन्यो नृपनिकरसंपूजितपदः ।
क्व वा राजद्रोहः क्व च महिभृतां विप्लवघटा
विचित्रं नामैतन्न० ॥ १३ ॥

मृगेन्द्रं गोमायुः क्व च गजपतिं हन्ति हरिणः
क्व मार्जारो व्याघ्रं जयति च गरुत्मन्तमुरगः ।
क्वचिद्वा मण्डूकोऽप्यभिभवति दर्वीकरकुलं
विचित्रं नामैतन्न० ॥ १४ ॥

यविष्ठानां कायः क्वचिदपचिनोत्येव सततं
क्वचिद्वा वृद्धानामलमुपचिनोति स्वत इह ।
परस्मिंश्चिन्तावत्प्रभवति विपर्यास उभयो-
र्विचित्रं नामैतन्न० ॥ १५ ॥

द्विषत्कारागारप्रतिनिवसतीनामसुखिनां
क्षणाः कल्पायन्ते ननु च मनुजानां क्व च पुनः ।
क्षणायन्ते कल्पाः सुखमनुसुखोल्लासितहृदां
विचित्रं नामैतन्न० ॥ १६ ॥

क्वचित् काशीनाथ स्मरहर हरेति स्तुतिपदं
कुतश्चिद्वा देवद्विजगुरुविनिन्दाकलकलः ।
क्व वा तादृङ्निन्दाप्रतिवचनसद्भावसमिति-
र्विचित्रं नामैतन्न० ॥ १७ ॥

अधीती वेदेषु क्व च जडतया भात्यपि सुधी-
रदृष्टिः स्वप्नेऽपि क्वचिदपि सुशास्त्रे पुनरहो ।
सतामेवार्थानामजनि बुधरूपोऽन्यथायिता ।
विचित्रं नामैतन्न० ॥ १८ ॥

परिक्रीतं मत्वा पतिमनुचरं काचिदबला
पदाघातं घ्नन्ती निजनिलयतो वा दवयति ।
परं ब्रह्मेत्येवं कलयति पुनर्यं कमपि वा
विचित्रं नामैतन्न० ॥१९ ॥

१ क्षीयते ।

मदोन्मत्तो मह्यामपि विपथगो विप्रतनयो
न कर्तुं व्याकर्तुं प्रभुरुचितमेवानवरतम् ।
दयालुः शान्तात्मा श्वपचोऽपि च धर्मेषु निरतो
विचित्रं नामैतन्न० ॥ २० ॥

दुरात्मा दुष्कार्यैः क्षणमपि य आत्मानमखिलै-
रधर्म्माणामेकं कलयति पदं सैष जयति ।
परं धर्म्माचारी पुनरिह परिभ्रश्यति सुखाद्-
विचित्रं नामैतन्ननु जयति कालव्यवसितम् ॥ २१ ॥

श्रीउपेन्द्रचन्द्रशर्मव्याकरणतीर्थस्य ।

---

१ चण्डालः ।

———



श्री: शरणम्।

# वियोगिनीबाला।

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥

( कालिदासः )

सम्प्रति वर्षा समयः। शनैः शनैः सिञ्चति धराम्पयोधरः । प्रस्थिता वियति बलाकाऽऽवलिः। दोधूयन्ते सुरभिसमीरणेन सलिलसिक्तास्तरुशाखाः। ह्रीयते च चेतः सुमनसां नीपसुमनसां सुगन्धेन। नभसि भासते समुदितं धनुस्तुरासाहः। शैलशिखरेभ्य इतः प्रपतन्पयोनिर्झरः प्रस्तरात्प्रस्तरमुपेयिवान्नव्यां भव्याञ्च क्षणमुत्पादयतीव शोभाम्। प्रकीर्णानि सरसीषु मृणालकन्दानि. । उड्डयन्त इतस्ततः पयःप्रपातविधुरा भ्रमराः । भङ्गीसङ्गमङ्गीकुर्वन्ति मरुता सरांसि। उदञ्चयति चञ्चुञ्चातकः। मधुरमधुरं शब्दायन्ते केकिनः। कलयति चासौ पुँस्कोकिलकाकली कुण्ठक्रमं पञ्चमक्रमं कामिनीनाम्। रसयति रसं रसालानां मधुरगभीरस्वरः कीरः। बालतृणैरास्तृता भूमिर्भ्रमयति काश्मीरास्तरणानाम्[2]। यस्याः किल भूषयन्ति प्रत्यंशं सितपाटलपीतवर्णानि प्रसूनानि। यत्र च मुक्तायन्त इव पयोबिन्दवः । चलति चेदमुपवनचत्वरशोभामेधयद्धारायन्त्रम्[3] ।

हन्त! परागाननन्दिष्टमेतस्याः। किं विदधामि केनोपायेन प्रसीदेन्मे मनः। क्व यामि। क्वास्मि। यामिनीयं बत दिवसः। कोऽयमारामः। का दशा मम। कुतोऽत्राऽऽनीतास्मि। हा वीरैकपूज्य! क्वासि। कथमद्य विहायैनामेकाकीं रमसे।

---

१ कवियं कन्दकापांसामिति कोशः। २ गलीचा इति प्रसिद्धम् । ३ फूहारा इति भाषा।

अपि विस्मृतोऽसि मां दयित! विपर्येति ते विप्रयुज्येत्रा प्रावृट्। प्रयच्छति चाऽनिर्वचनीयां व्यथाम्। हा दलदरविन्दसहोदरवदन! मा स्म गमयश्चिरसंचिताऽनुरागं विरागाय। विधे! निधेहि मयि किञ्चित्करुणाऽरुणं लोचनं मा यासीः पशुघ्नपदवीम्। कियन्निष्करुणः संवृत्तोऽसि। कथञ्च मां विस्मृत्य स्वस्थोऽसि यच्चतुर्ष्वन्यतमेन वदनेनाऽपि नो दयामयं वचनमादत्से। धिक्! ते चतुराननभावम्। अये कोकिल! कलय कलेन कलितेन कृन्तन्मे मर्माणि त्वमपि शर्माऽत्मनः। समीर! धीरय रयन्नैजम्[१]। मा च स्पृश विग्रहम्पापीयस्याः। विरम विरम नायं समयो वियोगिनीप्राणहरणस्य। अरेरे कन्दर्प पिशुन! शुनतु[२] ते दर्पः पर्वतसुताजानिनयने कथाशेषताम्। यदनपराधिनीमेनान्दुःखयसि। शातयसि चेषुभिः शरीरम्। हा दयायादःपते! पुरुषोत्तम! नन्वविशिष्टा कष्टायैषैव अपि तु निर्मितैवैतत्कृते। हा कष्टम्। ( स्मृतिमभिनीय सोन्मादं ) हा प्राणनाथ! कुत्र मन्दमन्दं चपलचपलं च क्राम्यसि। मा याहि विहाय सहानुगां माम्। एह्येहि स्मरललितमूर्ते! मा मुञ्चाऽनुकम्पाम्। ( सहसाऽभिप्लुत्य ) हा कान्त! कान्त!! कान्त!!! ( गृह्णतीव पतिपटान्तम् ) नैव जीवेयं प्रयाते त्वयि। धिगनुरागम्! हा भद्रमुख अनालोच्य विहिताऽनुरागा पतङ्गायिताऽस्मि खलु प्रदीप्ते दीपे। मा मुञ्च प्रीतिमन्[३]। किम्मुधा धावसि। विधेहि निषेकमन्तरङ्गे समाश्लेषसुधाया इति परश्शतं सोन्मादमालपन्ती मलिनयन्ती नयननीरैः कपोलौ स्खलन्ती च प्रतिपदं शोचन्ती चात्मानं काचिद्वियोगिनी बाला शिश्राय खलु गहनां मूर्च्छाम्।

इति प्रथमो निश्वासः।

---

१ रयः स्यद इत्यमरः। वेग इति यावत्। २ शुनगतौ तौदादिकः।
३ प्रीतम इति भाषार्थः।

## प्राप्तपत्राणां सारः प्रत्युत्तराणि च ।

पण्डितत्रिगृहगोवर्धनशर्मसु— अतीतो बहुतिथः समयः समधिगतस्य श्रीमतां पत्रस्य । न किल वयं वाञ्छामो महाकवेः कालिदासाद्वोपदेवस्य प्राचीनतां साधयितुम् । जानीमो हि त्रयोदशशताब्द्यां समुद्भूतमेनमिति । यत्तु कालिदासप्रबन्धे तं पातयां प्रथममासेत्यस्तेर्व्यवहितप्रयोगस्य व्याकरणान्तरसिद्धत्वं साधयितुं मुग्धबोधमेव प्रमाणीकृतमस्माभिस्तच्छिशपाचोद्यन्यायमवलम्ब्यैवेति बोद्धव्यम् । प्रयोगं चैनमपाणिनीयमाचक्षाणो मल्लीनाथो व्याकरणान्तरसिद्धतामेतस्य विस्पष्टयति । मुग्धबोधदृष्टान्तेन शक्यत एवोहितुं धीमद्भिरन्यत्रापि यस्मिन्कस्मिन्व्याकरणेऽवश्यं कृञादीनां व्यवहितानुप्रयोगानुशासनेन भवितव्यमितीयत एव मुग्धबोधोल्लेखः । यत्तूच्यते मुग्धबोधेऽपि मूले नायमर्थः समुल्लिखितः केवलं तु व्याख्याकृता प्रतिपादितो महाभाष्यविरोधादुपेक्ष्य इति । तन्न । न हि व्याकरणान्तरेण व्याकरणान्तरं विरुध्यते स्वतन्त्रेच्छत्वात्तत्तत्प्रणेतॄणाम् । भाष्यं च पाणिनीयसूत्राणां व्याख्या च मुग्धबोधसूत्राणामिति । न च मूलेऽनुक्तोऽर्थो व्याख्याकृद्भिर्न प्रतिपाद्यते । ध्वनिलब्धा हि भूयांसोऽर्थाः कैयटादिभिरुल्लिखिताः संदृश्यन्त इति । व्याख्यानत एव च प्रतिपद्यते विशेष इत्यपि न विस्मरणीयम् । अत एव च वागीशोदितोऽर्थो न नवीनः परन्तु मुग्धबोधगत एवेति ध्येयम ।

प्राचीनतमे कालापव्याकरणेऽपि असूभुवौ च परस्मै इति सूत्रव्याख्यायां कलापचन्द्रे अनुग्रहणात् तं पातयां प्रथममास इति संयोजयां विधिवदास इति । इत्युक्तम् । यद्यप्यग्रे मतद्वैधं प्रादर्शि तथापि न किल व्यवहितानुप्रयोगमतं प्रतिषिद्धम् । नव्यास्तु एवमन्यत्रापीत्यतिदेशतः प्रभ्रंशयां यो नहुषं चकारेत्यादिकमुपपन्नम् । आमः कृञनुप्रयुज्यत इति सूत्रादनुप्रयुज्यत इत्यधिक्रियत इत्याहुः ।

एवं च प्राचीनतमेन कालापव्याकरणेनापि सिद्धोऽयमर्थ इति कृतं पल्लवितेनेति ।

दैवाद्वैतमतस्थापकश्रीकोटीश्वरशास्त्रिषु—प्रव्रजिते पत्यौ पत्न्याः सौभाग्यालङ्कारधारणं युक्तं न वेति यदनुयुज्यते तत्रैतद्युक्तमेवेति ब्रूमः । सौभाग्यालङ्कारधारणप्रतिषेधस्य वैधव्यमात्रप्रयोज्यत्वाद्वैधव्यस्य च पत्युर्जीवद्-

शायामसुघटत्वात् । आचारश्चायं शिष्टानामिति विधवोद्वाहशङ्कासमाधितोऽव गम्यते । यत्पुनरनुयुज्यते संध्योपासने कालातिक्रमप्रायश्चित्तार्थं दीयमानमर्घ्यं किमु सन्ध्योपासनतः प्राक्प्रदेयमुताहो अर्घ्यत्रयप्रदानोत्तरमिति तत्रोत्तरमेव पक्षमनुमन्यामहे । आचान्तो विधिवत्प्राणानायम्यार्घ्यं चतुर्थकम् । कालात्ययविशुद्ध्यर्थं दत्त्वा सन्ध्यां समाचरेदिति संग्रहाद्युक्तेः । यदि च प्रागेव सन्ध्योपासनात्प्रायश्चित्तार्घ्यं दीयेत तदा चतुर्थमिति विरुध्येत न ह्यनुत्पन्ने त्रितये किमपि चतुर्थत्वमासादयतीति । न चैवं दत्त्वेति क्त्वा विरुध्येत । संध्यासमाचरणतः प्रायश्चित्तार्घ्यस्य पूर्वकालिकत्वावबोधकत्वात्तस्येति चेन्न । सन्ध्यापदेनात्र गायत्रीध्यानमात्रविवक्षणात् । अस्ति च ध्यानार्थत्वं सन्ध्यापदस्येति नैतन्नाविदितं प्रेक्षावताम् । शिष्टाचारोऽप्येवम् । स्मृतिमुक्ताफलव्याख्याकृतोऽप्येवमेवाहुः । इति ।

श्रीः १६-११-६१

श्रीमन्तः संस्कृतचन्द्रिकायाः सम्पादकाः ! ।

बहुचिराय संस्कृतचान्द्रिका न समागता को हेतुः झटित्येवोत्तरणीयम् । मदीयोयं लेखश्चास्यां संख्यायामेव प्रकाशनीयः ।

## ( विदुषामावश्यकीयद्रष्टव्यता )

आहोपुरुषतां प्रकटयद्भिः परीक्षकवरिष्ठैः प्रत्यब्दं सर्वासु परीक्षासु संस्कृतभाषा कठिनतमा चरीक्रियतेऽत एव प्रत्यब्दं संस्कृतजिघृक्षवो विलीयन्ते । अस्यां भाषायां विद्यार्थिमन आवर्जनं विद्वद्गोचरः । नो चेत् ( dead language मृतभाषा ) नामान्यनुभवन्तीयं वराकी नूनं शरणमलभमाना कथाशेषत्वं प्रयास्यतीति न चित्रम् । ये चाधुनिकाः पण्डितास्ते नितान्तं कर्कशाः कीटेऽपि हस्तिव्यवहारमाचरन्तो भारते विराजन्ते । प्रावेशिक entrance परीक्षायां B. A. परीक्षायाञ्च यादृंशि पत्राणि यद्योग्यताशालीनि प्रदत्तानि तानि च विदितप्रायाण्येव । परञ्च कष्टं भोः सुधियः विषयोऽयं विचारास्पदीक्रियतां के च प्रातिविक्षवः छात्राः काव्ये व्याकरणोपयोगश्च कः । तत्रापि वाहीकप्रश्नः पञ्चदशचिन्हजः । दीयतां दृष्टिः पारसीपत्रेषु न च तेषु व्याकरणगन्धोऽस्ति । स्थाने खल्वेतत् यवनानीपरीक्षकमहाशयानां तद्वृद्धिलिप्सूनाम् । यद् नीतिपुस्तकेपि ( Code ) नचेदृशः कोपि नियमः संदृष्टो यदवश्यमेव बहिस्तः प्रष्टव्यम् । यद्यस्ति प्रेमा संस्कृते काम्यते च वृद्धिस्तर्हि

पारसीतुल्यान्येव पत्राणि निर्मातव्यानि न वा तत्र स्वकीययोग्यता प्रचाकव्या अपि सर्वैरनुभूतोयं विद्यार्थिमात्र इति स्मारं स्मारं स्वकर्मणि प्रवर्तनीयम् । न चैवमैहिके साम्पराये च भविष्यत्येनः । साञ्जलिपुटं तत्रभवन्तः प्रार्थ्यन्ते न्यूनं स्वीकरिष्यन्ति दासस्यानुनयमिति शम् ।

विदुषामनुचरः
नरोत्तमशास्त्री
श्रीराधाकृष्णहाइस्कूल ( पेशावर )

---

## सानन्दमङ्गीकारः

षाणीविलाससंस्कृतग्रन्थमालायाः प्रथमं कुसुमं पार्वतीपरिणयनाटकात्मना प्रकाशितं प्राप्तमस्माभिः समधिगता च सद्धर्माख्यायाः संस्कृतमासिकपात्रिकायाः प्रथमा संख्या । एतयोश्च प्रेरयितृमहाशयेभ्यः सानन्दं सबहुमानं चानेकशो धन्यवादान् वितरामः ।

---

## समालोचना ।

सद्धर्मः—विंशतिपृष्ठात्मकं संस्कृतभाषासंग्रथितमिदं मासिकपत्रम् । विदितप्रायमेवास्योद्देश्यादिकं चन्द्रिकायाः प्रणयिमहाभागानाम् । प्रकाशितचरं हि चन्द्रिकाया आवरणे विज्ञापनमेतस्येति । प्रणन्दातितमां नश्चेतो भगवत्या गैर्वाण्या वाण्या नवं नवमभ्युदयमवलोकमानानाम् । पुस्तकमेतद्वृन्दावने संमुद्र्य मथुरायां प्रकाश्यते । यथा प्रगल्भतमाः पत्रेऽस्मिन्विषया एवं विद्वत्तम एवास्य संपादकवर्गोऽपीति प्रमोदयतितमां नश्चित्तमियमनुरूपतमा घटना । अस्यां च प्रथमसंख्यायां प्रस्तावना मासावतरणिका वेदो वेदषडङ्गानि स्मृतिः पुराणेतिहासतन्त्राणि साहित्यं शङ्कासमाधिर्हिन्दीभाषया तत्परामर्शश्चेत्यमी दश विषयाः प्रकाशिताः । तत्रादिमौ संपूर्णौ तदितरे पुनरुपक्रान्ता एव । प्रशंसनीया चात्रत्या भाषासरणिः । अवश्यं किल समाह्लादयेदिदं हृदयं सहृदयानाम् । रसिकजनहृदयावर्जनपटीयसोऽप्यस्य प्रकाशनं सर्वथा ग्राहकजनानुग्रहमात्रायत्तमिति नैतन्न जानीयुर्विद्वांसः । अतः किल प्रोत्साह्यन्ते प्रवर्त्यन्ते चास्माभिः संस्कृतभाषानुरागिणो महाभागाः संगृह्यैतत्संपाद्यतामंशतः संस्कृतभाषायाः पुनरुज्जीवनजन्यं श्रेय इति । मूल्यमेको

रूप्यक: । प्राप्तिस्थानं— पं. श्रीवामनाचार्या:–सद्धर्मकार्यालय:– प्रयागघाट–मथुरा इति ।

**वेदधर्मव्याख्यानम्**—जयपुरीयराजसभाप्रधानपण्डितानां विद्यावाचस्पतिश्रीमधुसूदनमैथिलानां कृतिरेषा । नामैव खल्वस्या अवबोधयत्येतद्गतं प्रतिपाद्यमिति नैतत्पृथग्वक्तुमावश्यकम् । नूनमतिमात्रमेवाहरत्यन्तरङ्गमस्माकं कृतिरियं वाचस्पतिमहाभागानाम् । अत्र किल प्रदर्शितास्तास्ता द्रढीयस्यो युक्तयो निर्मूलयेयुर्नास्तिकत्वं नव्यभव्यादीनां समुद्भेदयेयुश्च पाठितुरङ्गे वैदिकधर्मश्रद्धामित्यवधार्यतेऽस्माभिः । भूयिष्ठमेवोपकृतं भारतीयानां विशेषतश्च कलिकालवशात्परिम्लायतः सनातनधर्मस्य प्रबन्धमेनं प्रणयद्भिः श्रीमन्मधुसूदनमैथिलमहाभागैरिति सधन्यवादमेव ब्रूमः।इदं पुनरेकं शकलीकरोतीवास्माकं-न केवलमस्माकमपि तु वैदिकधर्मश्रद्धाजषामशेषाणामपि विबुधानां-चेतो यत्प्रबन्धोयं विप्रकुलसमुद्भूतैरपि लण्डनं नाम म्लेच्छनगरं गत्वा तत्रैव म्लेच्छानां पुरस्तात्पठितो वाचस्पतिमहाभागैरिति।प्रथमतस्तावत्कलौ प्रतिषिद्धतमायाः समुद्रयात्रायाःस्वीकारस्तत्र च म्लेच्छदेशनिवासस्तत्र च म्लेच्छानां पुरतः संस्कृतभाषया वैदिकधर्मप्रवचनं तत्रापि च श्रुतिस्मृत्यादिवचनोद्घोष इति महतीयमनर्थपरम्परेति नो बुद्धिः । यद्यपि जानीमः प्रतिपाद्यत एवाप्रतिषिद्धत्वं समुद्रयात्राया—न केवलं समुद्रयात्राया अपि तु म्लेच्छदेशगमनस्यापि—श्रीवाचस्पतिमहाभागैस्तथापि तदेतत्सर्वैः कान्तमात्मीयं पश्यतीति न्यायमवलम्ब्यैवेति ब्रूमः श्रद्धाजडा गतानुगतिकाश्च । न जानीमः पुस्तकस्यास्य मुखे लण्डननगरे संप्रवृत्तेति पदप्रकाशनतः को वा लाभो विभावितः प्रकाशकमहाभागेनेति । भवतु यद्भूतम् । प्रबन्धः पुनरयमवश्यं पठनार्हो जिज्ञासूनां विदुषां चेत्यभिप्रयतेऽस्माभिः । मूल्यमस्यानकचतुष्टयम् । उपलब्धिस्थानं च जयपुरे संस्कृतरत्नाकरकार्यालयः ।

**पुरुषार्थसंजीवनी**—ब्रह्मभूयं गतानां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यजगद्गुरुश्रीमच्छङ्कराचार्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमद्राजराजेश्वरश्रीशङ्कराश्रमपूज्यपादानां कृतिरेषा । भूयांसः खल्विदानीं कलुषयन्ति सनातनधर्मपथमविदिततद्रहस्याः स्वैरप्रलापैकशीलाः पण्डितम्मन्याः । विततमेषामीषां महामोहमये वाग्जाले निपतिताः सर्वथा विनश्यन्ति श्रद्धालुकुरङ्गमाः । अत्र च सनातनधर्मरहस्यानभिज्ञत्वं हेतुः । धर्मरहस्याभिज्ञानं च न हि तथाविधप्रबन्धमन्तरा सुघटम् । अत एव च प्रणीतः प्रबन्धोऽयं पुरा श्रीमज्जग-

द्गुरुशङ्कराश्रमस्वामिचरणैः । अवश्यं संग्राह्यः प्रबन्धोऽयम् । मूल्यमस्य सार्धैक-रूप्यकम् । प्राप्तिस्थानं किंग् एडवर्ड एशियाटिक एजन्सी, लाहोर इति ।

गीर्वाणवाण्यालयः— आलयोऽयं नानाविधसंस्कृतपुस्तकानां जयपुरीय-राजगुरुकुलोत्पन्नेन साहित्यशास्त्रिणा श्रीमता पर्वणीकरोपाह्वेन पं. मुकुन्दराम-शर्मणाऽवस्थापितः। विदितमेवैतद्विदुषां यदशेषाणामपि विद्यानां कलानां चादिमः प्रभव एकमात्रमेवेदं भारतवर्षमिति । यावन्ति चात्र गीर्वाणवाणीसंग्रथितानि तत्तद्विषयकाणि पुस्तकानि न किल तावन्त्यन्यत्र श्रवणपथमप्यारोहेयुः कुतः पुनर्दर्शनमार्गम् । एवंविधानां च भूयसां पुस्तकानां संग्रहालयमेनमवस्थाप-यता बह्वेवोपकृतं साहित्यशास्त्रिमहोदयेनेति धन्यवादार्ह एवायं महाभागः । पुस्तकानि खल्वेतानि विनैव शुल्कं पठनाय लभ्यन्ते जयपुरनिवासिभिर्यावत्प-क्षम् । वैदेशिका अपि प्रापणव्ययादिकियद्द्रव्यप्रदाने स्वाभीष्टं पुस्तकमधिगन्तुं प्रभवेयुः । प्रशस्यतमः किलायमुद्यमः श्रीमतो मुकुन्दरामशास्त्रिण इति भूयोऽप्येनं धन्यवादैः संयोज्य विरमामः ।

---

## किमपि निवेदनम् ।

कृतज्ञता हि नामायमसाधारणो धर्मः प्राणिनां विशेषतश्च प्रज्ञाप्रकर्षशा-लिनां मनुष्याणाम् । सा चेयं यदि न समये प्रकाश्येत न वा मनस्युदुह्येत तदा न जानीमः को वा विशेषः पशुभ्यो मनुजानामिति । येषां च विषये कृतज्ञताविष्कारणमावश्यकं तेष्वेवान्यतम आचार्यः । स हि विद्याप्रदानादिभिः सविशेषमेवोपकरोतीति । ये च नाम प्रकाराः कृतज्ञताविष्कारस्य तेष्वेवान्य-तमो जयन्त्युत्सवानुष्ठानम् । एतदेवालोच्य वत्सरेऽस्मिन् ज्येष्ठशुक्लनवम्यां पुला-नगरे केऽपि नियोगिनो बटव आत्मनः कुलाचार्याणां श्रीचिदानन्दसरस्वतीचर-णानां जयन्त्युत्सवमनुष्ठास्यन्ति। तदवश्यमुपस्थीयतामत्र नियोगिमतानुयायिभिरिति प्रार्थयन्ते चैते । प्रशंसामो वयममीषां बटूनां साधीयांसमनुकरणीयं चेमं व्यापारम् ।

---

# संवादसंग्रहः ।

## संपादकीयाभिप्रायश्च ।

## NEWS AND NOTES.

कलिकातासंस्कृतविद्यामन्दिरीयभूतपूर्वाध्यक्षस्य पण्डितप्रकाण्डस्य महामहोपाध्यायस्य श्रीमहेशचन्द्रन्यायरत्नस्य स्वःप्रयाणप्रवृत्तिं प्रकाशयतां दूयतेतमां नश्चेतः । अहो दुर्भाग्यं संस्कृतभाषाया यदस्यामेकान्ततो निष्णाताः प्राचीनाः पण्डितप्रवराः कालेन कृष्यन्ते । न चापि तथाविधा अपरे सम्पद्यन्त इति । महात्मायं निधनावसर एकसप्तते वयसि वर्तमानः समभूत् । बङ्गीयेभ्यो वाराणसेयेभ्यश्च तेभ्यस्तेभ्यः पण्डितप्रकाण्डेभ्यः समधीतान्यनेन तानि तानि शास्त्राणि । १७८९ तमेशकाब्दे प्राचीनां शैलीमवलम्ब्य समवस्थापिता कापि पाठशाला महात्मनैतेन । ततश्च द्वितीये वत्सरे संस्कृतविद्यामन्दिरे सहकारिशिक्षकपदे नियुक्तोऽयं महाभागः । अध्यैष्ट चायमस्मिन्नेवावसरे भाषां हौणीम् । १७९९ तमे शकाब्दे महात्मायं कलिकातासंस्कृतविद्यामन्दिरे प्रधानाध्यापकत्वमध्यक्षतां चापन्नः । अध्यगच्छच्च भारतीयभूपालतो महामहोपाध्याय इतिं सी. आय्. ई. इति चोपाधिम् । अयमेव महात्मा बङ्गेषु प्राथमिकः संस्कृतोपाधिपरीक्षायाः प्रवर्तयिता । न जानीमः के वा महात्मनाऽनेन प्रणीताः प्रबन्धा इति । निधनतः पुनरेतस्य महीयस्येव संस्कृतभाषाया हानिः संपन्नेति विषीदामः । भूतानि कालः पचतीति वार्ता ।

---

श्रीमद्भागवतवाल्मीकीयरामायणादीनां महाराष्ट्रानुवादस्य प्रकाशयिता श्रीमान् गणेशविष्णुचिपळुणकरमहाभागोप्यकाण्ड एव पर्यत्यजन्निःसारमिमं भूलोकमिति निवेदयन्तो विषीदामः । उपक्रान्तं किलानेन महाभारतस्य महाराष्ट्रभाषया प्रकाशनम् । महोत्साहशालिना चोपक्रान्तमिदमिदानीमर्ध एव विच्छिन्नप्रायमपरैरस्य सुहृत्तमैः सकार्तज्ञ्यमात्मनः शिरस्याहितभारमचिरादेव परिसमाप्येतेति नात्र सन्देहः। किन्तु नैतदमुष्य जीवद्दशायामेव परिसमाप्तमिति यत्सत्यमतिमात्रमेवैतद् दुःखाकरम् । यथा किल वयं पश्यामस्तथा विरला एव चिपळुणकरमहाशयसदृशा गुणगृह्याः कृतज्ञाश्च । वितरतु समुचितं पदमस्मै महाभागाय भगवान् भवानीरमण इत्याशास्महे ।

---




शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

त्रयोदशखण्डस्य ] १८२८ शाकज्येष्ठमासस्य [ तृतीयसंख्या

## मासावतरणिका ।

मधु सुरभिलं वीताशङ्कं न्यपायि दिवानिशं
कुसुमितमुपागत्य प्रेम्णा समुन्नतवैभवम् ।
गतवति दशां शोच्यां तस्मिन् रसालमहीरुहे
मधुकरयुवा मासि ज्येष्ठे लुठत्यधिकेतकि ॥

## सुभाषितानि ।

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदात्ततायाः ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुद्रसमुद्रपानम् ॥

विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥

उन्नत्यै नमति प्रभुं प्रभुगृहे गन्तुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया ।
प्राणान्प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
तत्सर्वं विपरीतमेव कुरुते तृष्णान्धदृक्सेवकः ॥

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

# पुरोहितधौर्त्यम् ।

अस्ति कुसुमवत्यां प्रज्ञान्धो नाम महान् धनिकः । स कदाचिदात्मनः सद्मे माघे मासि महिषीं प्रसूतामवलोक्य व्यचिन्तयत् । अहो मे दौर्भाग्यं यन्नानाविधोपभोगसाधनसंकुले शक्रसद्मप्रतिभटेऽप्यस्मदीयेऽस्मिन् भवने माघे प्रसूता महिषी । सा ह्यत्र मासे प्रसूता स्वामिनो मरणाय प्रकल्पत इति स्मृतिकृत आचक्षते । तत्का बतात्र प्रतिपत्तिः । भवतु पृच्छामि तावदत्रार्थे पुरोहितम् । इति विमृश्य विनयविनिबद्धाञ्जलिः समुपसृत्य प्रतारकप्रवरमात्मनः पुरोहितमनीतिदेवं नाम कृतप्रणामः पप्रच्छ । भगवन् माघे किल प्रजाता महिषी मन्दिरेऽस्य जनस्य तत्किं वाऽत्र प्रतिविधेयमिति । पुरोहितश्चायमनधिगतधर्मशास्त्रोऽनाघ्रातकर्मकाण्डगन्धः कथं कथमप्यधीतसाहित्यलेशः पण्डितम्मन्यश्चासीत् । विरला हि प्रायेण साक्षरा विशेषतश्चाधीतधर्मशास्त्रकर्मकाण्डादयः पुरोहिताः । स चायमाकर्ण्येदं प्रज्ञान्धभाषितं किञ्चिदिव विचार्य प्रत्याह । भद्रमुख! महान्किलात्र दोषः । अवश्यं चास्य प्रशमनाय कोऽपि यागोऽनुष्ठेयः । तदर्थं चाह्रियन्तां घृतं कदलीफलानि गौरसर्षपाः कृष्णतिलाः समिधश्चेति संभाराः । दक्षिणार्थं च महिषीशतं समपेक्ष्यत इति । तेन च तथाकृते साडम्बरं विरचय्य स्थण्डिलं प्रज्वाल्य च जातवेदसं घृताक्तानां तिलसर्षपादीनामाहुतीः प्रचिक्षेप । अन्ततश्च सह घृतेन कदलानि भक्षयाञ्चक्रे । अवसरे चास्मिन्नुपस्थितः कोऽप्यर्थलुब्धो नाम मीमांसकः प्रेक्ष्यैतद्विस्मितः प्रष्टुकाम इव यावत्पुरोहितसमीपमुपसर्पति तावदयं स्रुचा घृतमादाय

**अस्य मूर्खस्य यागस्य दक्षिणा महिषीशतम् ।**
**त्वयार्धं च मयार्धं च विघ्नं मा कुरु पण्डित ॥ स्वाहा ॥**

इत्युच्चैरुच्चार्य घृताहुतिमेकां तत्याज । अर्थलुब्धोऽप्याकर्ण्य तदीयमेतद्वचनमवगततदाशयस्तूष्णीं तस्थौ । पुरोहितोऽपि समवसितकर्मा यथाप्रतिज्ञं तस्मै पञ्चाशन्महिषीः प्रायच्छदित्यहो प्रभावस्तृष्णायाः !

# श्रीमान् रत्नखेटदीक्षितः ।

( पूर्वतोऽनुवृत्तः )

हृदयङ्गमानि किल कवेरस्य गद्यानि । अत इदानीं तान्येव प्रथमतः कार्तिपद्यान्युदाहर्तुमिच्छामः । तत्रेदं द्वारकोपवर्णनम् । यथा—

अस्ति खलु प्रशस्तशोभानन्दितजननयनतारका द्वारका नाम पुरी । यत्र च नीपहृद्या वनीपहृद्या अवनीपहृद्याश्चाश्रमा मालमञ्जुस्तमालमञ्जुः कृतमालमञ्जुश्च क्रीडाशैल आर्याधिकानन्ददो भार्याधिकानन्ददः सभार्याधिकानन्ददश्च भूपतिः । किं च लसमानो नलसमानोऽनलसमानश्च पौरवर्गो वरतोल्लसिता नवरतोल्लसिताऽनवरतोल्लसिता च वनिताजनता । किं च कृतानिमेषकुलतृषितया यत्र सरांसि सवन्ति रसवन्ति सारसवन्ति चानन्दितरामतयोपवनानि लवन्ति सालवन्ति रसालवन्ति च यत्र च सुरसालावलीव सुरसालावली सदाखण्डलसद्विचाररमणीया तथापीयं मरालीगतिहृद्या सा पुनरमरालीगतिहृद्या निर्मलात्मभूदेवा इव निर्मलात्मभूदेवाः सरससरस्वतीवलग्नप्रेमावगाहनश्रद्धान्वितास्तथाप्येतेऽभिजातकीर्तिकलितास्ते पुनर्नाभिजातकीर्तिकलिताः सुपर्वसुन्दरास्ते जनास्तेजनाश्च तथापि कृशानुभावास्पदत्वमकृशानुभावास्पदत्वं चेति तेषां परस्परभेदो विविधभ्रमरहितभावमनोरमा बालबकुलश्रीरिव बालबकुलश्रीस्तथापि केशप्रसाधनयोग्यैका केशप्रसाधनयोऽग्यान्या चेति भेदः ॥ इति ।

नीपैः कदम्बतरुभिः हृद्याः मनोहराः । वनीपकानां याचकानां हृद्याः सम्पन्नतया मनोरथपूर्तिहेतुत्वात् । अवनीपानां भूपतीनां हृद्या विलासोचितत्वात् । आश्रमाः मुनिप्रभृतीनां मठो गार्हस्थ्यं वनं चेत्येवंरूपाः । आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठ इति मेदिनी ॥ मालतमालकृतमाला वृक्षविशेषाः । सभार्याः सभासु श्रेष्ठाः सभ्या इति यावत् । लसमानः शोभमानः । नलेन राज्ञा समानः

पुण्यश्लोकत्वात्। अनलसमानः पावित्र्यातिशयात्। वरतयोत्तमत्वेनोल्लसिताः शोभिताः। नवरतोल्लसिता इति स्पष्टम्। अनवरतं सन्ततमुल्लसिता अम्लानाः। वनिताजनता नारीजनसमूहः। यत्र रसवन्ति जलपूर्णानि सारसवन्ति कमलयुतानि च सरांसि सवन्ति यज्ञायन्ते। तत्र हेतुः। कृतानिमेषकुलतृप्तितयेति। कृता अनिमेषाणां मत्स्यानां पक्षे देवानां च कुलस्य तृप्तिर्यैस्तथाविधत्वात्। सालवन्ति वृक्षविशेषशालीनि रसालवन्ति आम्रतरुयुक्तानि च उपवनानि लवन्ति लवो रामपुत्रस्तद्वद्भवन्ति। तत्र हेतुः। आनन्दितरामतयेति। आनन्दितो रामो दाशरथिर्येन पक्षे आनन्दिताः सञ्जातानन्दा रामाः सुन्दर्यो यत्र तथाविधत्वात्। सुरसालावलीव सुरसाला देवतरवस्तेषामावली पङ्क्तिरिव सुरसालावली शोभनरसालपङ्क्तिः। तत्र हेतुः। सदाखण्डलसद्विचाररमणीयेति। सदा सदैव आखण्डलस्य इन्द्रस्य सता विचारेण विशिष्टसंचरणेन रमणीया पक्षे अखण्डं यथा तथा लसता वीनां पक्षिणां चारेण संचरणेन रमणीया। इयं रसालावली। मराली हंसी। अमराली सुरपङ्क्तिः। निर्मला रजस्तमोगुणलक्षणमलरहिता आत्मभूदेवा ब्रह्माणः। गौरवे बहुवचनम्। त इव निर्मल आत्मा येषां तथाविधा भूदेवा ब्राह्मणाः। सरसायाः सरस्वत्या वलग्ने अवलग्ने प्रेम्णा यदवगाहनं तद्विषयिणी श्रद्धा वाञ्छा तया चिता युक्ताः। ब्राह्मणास्तु सरसायाः शृङ्गारादिरसविशिष्टायाः सरस्वत्याः साहित्यादिरूपाया वलग्ने मध्ये यदवगाहनं प्रवेशस्तत्र श्रद्धाऽऽदरः तया चिताः। एते ब्राह्मणाः अभिजातकीर्तिः कुलीनत्वजन्या कीर्तिः। ते ब्रह्माणः। नाभौ जाता इति कीर्तिः विष्णुनाभिकमलोद्भूतत्वात्तेषाम्। ते प्रसिद्धा जनाः तेजना वेणवश्च। सुपर्वसुन्दरा देववत्सुन्दराः पक्षे शोभनैः पर्वभिः काण्डैः सुन्दराः। तथापि वेणूनां कृशानुभावो वह्नेरवस्थितिः तदास्पदत्वं तदर्हत्वमिति यावत। जनानां तु अकृशो योऽनुभावः प्रभावोऽनुभवो वा तदास्पदत्वं तत्स्थानत्वम्। वेणूनां मुक्तास्थानत्वं मौक्तिकस्थानत्वं वेणुषु हि मौक्तिकानि भवन्तीति प्रसिद्धिः। जनानां पुनर्न मुक्तमास्थानं सभा यैस्तेऽमुक्तास्थानास्तत्त्वं सभावर्तित्वं पाण्डित्यातिशयादिति भावः। बालबकुलानां नवबकुलकुसुमानां श्रीरिव बाडवानां बवयोर्डलयोश्चाभेदाद्वाडवानां ब्राह्मणानां कुलस्य श्रीः। विविधानां भ्रमराणां हितभावेन मनोरमा। पक्षे विविधो यो भ्रमस्तेन रहितस्य भावो राहित्यं तेन मनोरमा। बकुलश्रीः पुनः वालापचिता केशेषु ग्रथिता वाडवश्रीस्तु नैवैरालाप-

पौश्चिता युक्ता। पुनश्चाद्या केशप्रसाधनयोग्या केशालङ्करणयोग्या अपरा च को ब्रह्मा ईशः श्रीशङ्करः अः विष्णुश्च तेषां प्रसाधने सिद्धौ प्राप्ताविस्यर्थः योग्या। इति।)

इदमप्यन्यदवलोक्यतां रसिकैः सहृदयहृदयापहारचतुरं गद्यम्। यथा—

यत्र च वनितानाममृतार्णवन्ति कटाक्षा वचनानि च मनोजवन्ति सुरतानुरागा यौवनानि च वनराजीवन्ति दृशः क्रीडास्थानानि च। यत्र यादवानां धर्मनिष्ठतया पौरवन्ति प्रतापा मण्डलानि च जनितरामानुरागतया कुशलवन्ति संसारा यशांसि च कविसन्तोषानुकूलतया दानवन्ति व्यापारा धनधान्यानि च यत्र सर्वत्रुतया भवन्ति निशामुखानीव द्विजमण्डलानि परलोकजयक्षमतया सारसवन्ति सरांसीव क्षत्रियवृन्दान्यनुग्रकरप्रसारहर्षकराजत्वेन कुर्वन्ति कृष्णभुजमण्डलानीव वैश्यकदम्बानि। यत्र च स्त्रीणां भ्रमन्ति नाभयो न बुधा उत्सर्पन्ति रोमावलयो न शत्रवो दरन्ति कण्ठा न पौरा गदन्ति वियोगा न दुर्भाषां जना हरन्ति हासा न धनानि स्तेनाश्चरति कुसुमशरो न संयत्। यत्र यौवतं चतुरगति कुञ्जरति ललितपदगति लीलया वलतीतस्ततः किन्तु न चापति न चाशुगति। यत्र च जनितचक्रवालभ्रमाः स्वकुचा इव वनिताः क्वचिद्वारिभिरालीजनैः क्वचित्कन्तुकामितलीलया।

अत्र चामृतार्णवन्तीत्यादिषु क्विप्समागतोपमा पक्षे मतुप् च। अमृतार्णवन्ति अमृतार्णववत् आचरन्ति आह्लादयन्तीत्यर्थः। पक्षे अमृतवत् यानि अर्णानि अक्षराणि तद्युक्तानि। सुरतानुरागा मनोजवन्ति मनसो जव इवाचरन्ति अतिमात्रं सावेगं प्रसर्पन्तीत्यर्थः। यौवनानि पुनर्मनोजवन्ति मदनविशिष्टानि कामलीलायुक्तानीत्यर्थः। दृशो वनराजीवमिवाचरन्ति क्रीडास्थानानि च वनानां राजीभिर्युक्तानि भवन्ति। यादवानां प्रतापा धर्मनिष्ठतया धनुर्विद्यानिष्ठत्वेन पौरवन्ति पुरुकुलोत्पन्नभूपतुल्या भवन्ति। मण्डलानि देशाश्च पौरयुक्तानि। रामौ दाशरथिबलदेवौ रामाः स्त्रियश्च कुशलवन्ति कुशलवाविवाचरन्ति तौ हि जनितरामानुरागाविति। क्षेमयुक्तानि च भवन्ति। व्यापारा धनधान्यानि च दानवन्ति दानववदाचरन्ति कुतः कविसंतोषानुकूलतया को ब्रह्मा

विर्गरुडस्तौ संतोषयतीति कविसंतोषः श्रीकृष्णस्तस्यानुकूलतया दानवाश्च कवेः शुक्रस्यानुकूला भवन्ति । धनधान्यानि च दानविशिष्टानि भवन्ति । निशामुखानि प्रदोषा इव द्विजमण्डलानि अपि भवन्ति । प्रदोषा भैर्नक्षत्रैर्युक्ताः । द्विजमण्डलानि सर्वज्ञतया भवन्ति शङ्करवदाचरन्ति सोपि हि सर्वज्ञ इति । सरांसि यथा सारसवन्ति कमलयुक्तानि एवं क्षत्रियवृन्दान्यपि परलोकस्य शत्रुसमूहस्य जये क्षमतया समर्थत्वेन सारसवन्ति सार उत्कृष्टः सवो यज्ञ इवाचरन्ति । यज्ञोपि हि परलोकप्राप्तिक्षमो भवतीति । अनुग्रस्य सौम्यस्य करस्य प्रसारेण हर्षको राजा येषां तद्भावस्तत्त्वं तस्मात् वैश्यकदम्बानि कुर्वन्ति कुवं कमलमित्राचरन्ति कमलान्यपि हि अनुग्राणां कराणां किरणानां प्रसारेण हर्षको राजा चन्द्रो येषां तथाविधानि भवन्तीति । कृष्णभुजमण्डलान्यपि कुर्वन्ति कमलतुल्यानि भवन्ति । नाभयो भ्रमन्ति आवर्ततुल्या भवन्ति बुधास्तु न भ्रमन्ति न मुह्यन्ति । रोमावलय उत्सर्पन्ति उत्कृष्टसर्पतुल्या भवन्ति शत्रवः पुनर्नोत्सर्पन्ति नोपसर्पन्ति । कण्ठा दरन्ति शङ्खतुल्या भवन्ति । पौरास्तु न बिभ्यति । वियोगा गदन्ति रोगवद्दुःसहा भवन्ति जनाः पुनर्दुर्भाषां न गदन्ति न भाषन्ते । हासा हरन्ति धवलतया शङ्करतुल्या भवन्ति स्तेनाः पुनर्धनानि न हरन्ति । कुसुमशरो मदनश्चरति चरो दूत इवाचरति वशवर्ती भवतीत्यर्थः । सम्पत्तु न चरति नास्थिरत्वमुपयाति। यत्र यौवतं युवतीनां समूहः तुरगाति तुरङ्गमवदाचरति एताद्रि तद्वच्चतुरगति भवतीति अश्वाश्चतुरा चार्वी गतिर्गमनं येषां तथाविधा भवन्ति यौवतं च चतुराणां विदुषामिव गतिर्ज्ञानं यस्य तथाविधं भवति । सर्वे गत्यर्था ज्ञानार्था इत्यङ्गीकारात् । किं चैतत कुञ्जरति कुञ्जरवद्भवति कुञ्जे ह्यस्य रतिः प्रीतिर्भवतीति । किं चैतल्ललितो यः पदगः पदातिस्तद्वद्भवति ललिता ह्यस्य पदयोर्गतिर्भवतीति । लीलया इतस्ततो वलति भ्रमति । अपति पतिशून्यं वाऽऽशुगति त्वरितगमनं वा न भवति । वनिताः स्वकुचा इव कुचा हि जनितश्चक्रवालस्य कोकशिशोर्भ्रमो भ्रान्तिर्यैस्तथाविधा भवन्ति तेषां तत्सदृशत्वात् । वनिता अपि जनितः कृत आरब्ध इति यावत् चक्रवालभ्रमो मण्डलभ्रमणं हल्लीसकाख्यं याभिस्तथाविधा भवन्ति । हारिभिर्मनोहरैरालीजनैः सखीजनैः सहजनितेत्यादिना संबन्धः ।

इदमप्यपरमनुगृह्यतामालोकप्रदानेन परिहासोपवर्णनात्मकं गद्यं प्रियपाठकमहाभागैः—

**तदा तु भर्तृदारिका प्रसेवकराजत्करा ह्यक्षरामृतरमणीयां कविजनतासरस्वतीमिव वरदां नाम तरङ्गिणीमनुजगाम सा सवयसीभिः सखीभिर्बालेऽतनुविहारक्लान्तासि मुग्धे किमद्यापि चापक्रीडापरायणास्यबले शरवृन्दे पतस्युन्मत्ते क्षीरार्णवतीर्णाऽप्यक्षीरासि तन्वि कीलालार्द्रं वसनं परिहराबुधे कुतो विषं पिबस्यपापे त्यजामूदृशं कबन्धानुरागमिति विविधव्यवहारचतुराभिर्निर्वर्तितजलक्रीडा यावद्भवनमायाति तावन्मल्लिका नाम सहचरी प्राह । इति ।**

अत्र च प्रसेवकः सूत्रनिर्मितभाण्डविशेषो डोल इति ख्यातः । अक्षरमविनाशि यदमृतं जलं तेन रमणीयां पक्षे अक्षराण्येवामृतं तेन रमणीया ताम् । अतनुर्महान् विहारस्तेन क्लान्ता । अतनुविहारो मदनक्रीडा च । चापक्रीडा धनुर्विहारः च आपक्रीडा इति च च्छेदः । आपं जलसमूहः । शरवृन्दं बाणसमूहो जलसमूहश्च । अर्णव इव क्षीरं जलं क्षीरार्णवस्तं तीर्णा अक्षीरा अप्रजातत्वादिति भावः । कीलालं जलं रक्तं च । विषं जलं गरलं च । कबन्धं जलं कबन्धः शिरोविकलः कायश्च ।

प्रक्षिप्यतां चात्रापि गद्यांशे दृष्टिः प्रियपाठकमहाभागैः ।

**किं च मन्मथाज्ञां लोके को वा व्यावर्तयितुं शक्तः । तथा हि । मृगा अपि सदा रामानुरक्ताः खगा अपि सुन्दरीसक्ता नागा अपि कान्तानुसारिणो भृङ्गा अपि लतास्वङ्गीकृतप्रणयाः । इति ।**

वचनमेतदाकर्णितभैष्मीवृत्तान्तस्य भगवतः श्रीकृष्णस्यावश्यमुपस्थानं संभावयन्त्या भैष्म्या वयस्यायाः । अत्र च दुरुत्तरत्वं मन्मथप्रभावस्योपवर्ण्यते । एवंविधमेव च वचनं श्रीमतो भट्टबाणस्य कादम्बर्यां सन्दृश्यते । अतः पुनरतिमात्रं तद्रमणीयमिति प्रमाणमत्र सचेतसां चेतांसि । तच्च यथा—

नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः × × ×× का वा गणना सचेतनेषु । अपगतचेतनान्यपि संघटयितुमलं यद्यस्मै रोचते । तत्कुमुदिन्यपि दिनकरकरानुरागिणी भवति । कुमुदिन्यपि शशिकरद्वेषमुज्झति । निशापि वासरेण सह मिश्रतामेति । ज्योत्स्नाप्यन्धकारमनुवर्तते । छायापि प्रदीपाभिमु-

खमवतिष्ठते । तडिदपि जलदे स्थिरतां व्रजति । जरापि यौवनेन संचारिणी भवति । किंवा तस्य दुःसाध्यमपरं येनायमगाधगाम्भीर्यस्तृणवल्लघुतामुपनीतः ॥ इति ।

प्रियपाठकाः ! भूयांसि किलात्र रसिकजनहृदयहठाकर्षणपटीयांसि गद्यानीति नात्र सन्देहः । न पुनरेतानि साकल्येनात्रोदाहर्तुं शक्यानि लघीयस्यानया चन्द्रिकयेति स्वयमेव साक्षात्कृत्य प्रबन्धमेनमास्वाद्यताममृतसहोदरो रसः समासाद्यतां च तिरस्कृतवेद्यान्तरः कोपि निरतिशय आनन्द इति प्रार्थ्यतेऽस्माभिः । अतः परं च प्रबन्धेऽत्र विद्योतमानानि कियन्तिचित्पद्यान्युदाहृत्य प्रबन्धमेनमुपसंहरिष्यामः ।

( क्रमशः )

---

# प्राचां भूगोलविज्ञानम् ।

( पूर्वतोऽनुवृत्तम् । )

अयं हि न हि निरक्षतः सार्धत्रयोविंशतेरंशेभ्य उदक् संक्रामति पथिकस्तु ततोऽप्यूर्ध्वं प्रयात इति । एवं यदोत्तरं प्रयातः पान्थोयं ध्रुवमौत्तरमभिसंक्रामेत्तदा निरक्षतः सार्धत्रयोविंशत्यंशाभ्यन्तरे भुवं परितः क्रान्तिवृत्ते परिभ्रमन्नादित्योऽयमात्माधिष्ठितं प्रदेशं प्रदक्षिणक्रमेण परिभ्रमन्नेवालोक्येतेति विस्पष्टमेवेदम् । अत एव च संगच्छते एनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवमिति भारतीयं वचनम् । एवं च निर्दिष्टपूर्वस्योत्तरध्रुवोपवर्णनस्य प्रकृतस्य च मेरूपवर्णनस्य तुल्यत्वादुत्तरो ध्रुव एव मेरुरिति सिद्धम् ।

इतश्चौत्तरो ध्रुव एव सुमेरुः । तथा हि । निर्दिष्टमेवोत्तरध्रुवोपवर्णने प्रागस्माभिर्यदुत्तरध्रुवे षाण्मासिको दिवसः षाण्मासिकी च रात्रिर्भवति । मेरावपि नन्वेवमेव संभवति । तथा हि । सुमेरुस्तावद्देवानां निवास इति सिद्धमेवैतत् स्वर्लोको मेरुरेव स्यादित्यादिभिः सिद्धान्तकृतां वचनैः । प्रमाणं चात्रार्थे समुपहृतपूर्वाणि पौराणिकानि वचनानि । एतेषु हि मेरोः शृङ्गेष्वेकविंशतेः स्वर्गाणामव-

स्थितिरभिधीयते । अत एव च स्वर्लोकपदं सुमेरुपर्यायतयोपनिबध्यते कविभिः स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलायिताया भुवो भर्तेत्यादिषु वचनेषु । स्वर्लोकपदं च समाख्यया देवावासमभिधत्ते । देवानां च षाण्मासिकी रात्रिः षाण्मासिको दिवस इत्ययनं दक्षिणं रात्रिर्देवानामुत्तरं दिनमित्यादिभिः पौराणिकैर्वचनैः स्पष्टम् । अयनं च षण्मासात्मकं भवति । अत्र चोत्तरायणदक्षिणायनशब्दयोर्योऽर्थः सोऽयं विस्पष्टीकृत एवास्माभिः प्राक् । उत्तरदक्षिणशब्दौ ह्यवधिसापेक्षौ । स चात्रावधिरङ्गीकर्तुं शक्यो येन खल्वङ्गीकृतेन देवानां रात्रेश्च दिवसस्य च षण्मासात्मकत्वं परिसिध्यति । न च निरक्षप्रदेशापरपर्यायस्य विषुववृत्तस्यावधित्वस्वीकारमन्तरा तत्संभवति । तथा हि । सर्वोऽपि खलु भूतलनिवासी देही स्वेनाधिष्ठितप्रदेशस्य क्षितिजंयावदेव गगनमण्डले परिभ्रमत्तारादिकमवलोकयति न तु ततः परवर्तीति प्रत्यक्षत एव सिद्धोऽयमर्थः । क्षितिजं च नाम भूम्यर्धं भवतीति सिद्धान्तविदां समयः । क्षितिजपरवर्तित्वादेव नेक्ष्यते निशि भास्करोऽस्माभिः । सुमेरुप्रदेशवर्तिनां च देवानां निरक्षप्रदेश एव क्षितिजं भवति । सैव हि तत्रावस्थितस्य भूम्यर्धसीमेति । अत एव च विषुववृत्ताधोवर्ती नेक्ष्यते भगवान् भानुर्देवैः । स एव च समयो रात्रिरित्याख्यायते यत्राशक्यदर्शनो भगवान्सूर्यः । समयश्चैवंविधो मासषट्कात्मक एव सुमेरुप्रदेशवर्तिनां देवानामित्यत एवोच्यते षण्मासात्मकत्वं देवानां रात्रेः । एवमेव षण्मासात्मक एव देवानां सूर्योपलक्षितः समय इति दिनमप्यमीषां षण्मासात्मकमेवोदाहियत इति द्रष्टव्यम् । एवं च सुमेरूत्तरध्रुवप्रदेशयोरुपवर्णनस्य तुल्यत्वादुत्तरध्रुवप्रदेश एव सुमेर्वपरपर्याय इति ब्रूमः ।

यत्तूच्यते न क्वापि संदृष्टचरं नापि श्रुतपूर्वं केनापि कनकमयत्वं कस्यापि शैलस्य नापि तत्सानूनां रत्नमयत्वम् । उपवर्ण्यते तु पौराणिकैर्मेरुः कनकपर्वत इति कनकमयत्वं मेरोः । सानूनां चामुष्य रत्नमयत्वम् । तत्कथं नामैतत्संभवतीति । अत्र ब्रूमः । कनकमयो रत्नमयमित्यादिषु किल न विकारार्थे मयट् किन्तु प्राचुर्यार्थे एव । ततश्च कनकप्रचुरो मेरू रत्नप्रचुराणि चामुष्य सानूनीत्यर्थः । न चैतन्न संभवति । कनकाद्याकरभूयिष्ठत्वान्मेरोः । संदृश्यन्ते

१ दशकुमारचरिते दण्डिन इदं वचनम् ।

२

हि कनकाद्याकरशालिनः सह्यादयः शैलास्तन्नैतदाश्चर्यं यदि सुमेरावपि भूयांसः सुवर्णाकरा विद्येरन्। न चापि मृषोपवर्णने प्राचां कमपि हेतुं पश्यामो नाप्यसंभवास्पदत्वमेषां वचनस्य येन गत्यन्तरमपश्यन्तः प्रामाण्याभावमेवैतेषां प्रतिपद्येमहि। न चोपपद्यमानेऽर्थे विप्रपत्तिर्युक्ता। उपपद्यते च सरलेनैवाध्वनाऽयमर्थ इति।

क्वचित्क्वचित्पुनर्मूले सूक्ष्मोऽग्रतश्च विशाल इति सुमेरोरुपवर्णनमुपलभ्यते। तदपि नैकान्ततोऽसंभवि। चत्वारो ह्यस्य विष्कम्भपर्वताः कल्पिता दृश्यन्ते। ते च सुमेरौ द्रोणीचतुष्टयं कुर्वाणा मूलतो विशाला अग्रतश्च सूक्ष्मास्तन्निष्ठा एव तत्तन्नाम्ना व्यवह्रियमाणास्तदुत्सेधभूताः कल्पिताः पर्वतविशेषाः। तेषां च चतुर्णामपि शैलानां सुमेरुसमाश्रयभूतत्वकल्पनयैव सुमेरोर्मूलतः सूक्ष्मत्वं कल्प्यते। यथा तावदवागग्रः शङ्कुर्न शक्नोति भूमाववस्थातुं स एव तु चतसृष्वपि दिक्षु प्रदत्तालम्बः सुखमवतिष्ठते। एवमेव सुमेरुरपि विष्कम्भशैलैर्ध्रियमाणोऽवतिष्ठत इति बोध्यम्। एतावांस्तु विशेषो यच्छङ्कुरयमवलम्बचतुष्टयाद्विभिन्नो भवति सुमेरोः पुनरुत्सेधा एवामी चत्वारो विष्कम्भगिरित्वेन व्यपदिश्यन्ते। न त्वेते ततः पृथग्भूता गिरय इति। एतेन सुमेरोर्मूलतः सूक्ष्मत्वेऽवस्थितिरेव न संभवतीति पुराणविद्वेषिणां केषांचित्सन्देहः सुदूरमपास्तः।

न चैवं उत्तरध्रुवत्वेन मेरोः सत्त्वस्य संसिद्धावपि सम्प्रत्युत्तरध्रुवस्य सलिलावृततया मेरोश्चेलावृताख्यभूभागवर्तित्वोक्तेः कथमुभयोरभिन्नत्वमिति वाच्यम्। विरोधाभावात्। तथा हि। इलावृतमिति संज्ञैव तात्क्तप्रदेशस्य तस्य सलिलावृतत्वमवबोधयति। वारिपर्यायो हीराशब्द इति कोशकाराः प्राहुः। इरया चावृतमिरावृतं वर्षम्। तदेव चेलावृतमपीति। अभिन्नत्वाद्रलयोः। एतावान्पुनर्भेदो यद्भूमिभूयिष्ठ एवासीत्पूर्वं प्रदेशोऽयं सम्प्रति पुनः सलिलप्रचुर एव संवृत्त इति। केचिद्धि शैला अपीदानीं सलिलावमग्नाः प्रतीयन्ते। तदेतदाधुनिकेष्वपि भूगोलवर्णनेषु स्पष्टमिति नात्राख्यायते।

एवं चोत्तरध्रुवप्रदेश एव सुमेरुः। षाण्मासिक्या रात्रेः षाण्मासिकस्य च दिवसस्य तत्रैवोपपद्यमानत्वात्। तमेव परितः सूर्याचन्द्रमसोः प्रदक्षिणक्रमेण

परिभ्रमणात्तत्रैव च पौराणिकवर्णनान्तरस्य संगतेः संदृश्यमानत्वादिति सिद्धम् ॥

इति ।

इति श्रीअप्पाशर्मविद्यावाचस्पतिप्रणीते प्राचां भूगोलविज्ञाने प्रथमः परिच्छेदः ।

श्रीसदाशिवार्पणमस्तु ॥

---

# एवं नन्वेतत् ।

विदितमेवैतदशेषाणामपि चन्द्रिकायाः प्रणयिप्रकाण्डानां यद्यावच्छक्ति च यावद्बुद्धिवैभव च समुज्जीवयितुं प्रयतितुकामा एकमात्रोच्छ्वासावशिष्टजीवितां भगवतीं गैर्वाणीं वाणीं विचिन्तयन्तश्च विना सामयिकविषयप्रकाशनं सुदुःसाधतामस्याः प्रत्युज्जीवनस्य संभावयन्तश्च साप्ताहिक्याः संवादपत्रिकायाः सामयिकविषयप्रकाशनानुरूपत्वमतीते वत्सरे सूनृतवादिन्या नाम पत्रिकायाः प्रकाशनमभिलष्यन्तः प्राचीकशाम चन्द्रिकायां विज्ञापनमेतस्याः । प्रमोदते च नश्चेतः समवेक्षितमात्र एव तस्मिन्विज्ञापने संवृत्ताः संस्कृतभाषायां सनिर्भरं स्निह्यन्तः केऽपि महाभागा ग्राहका एतस्या इति । धन्यवादार्हाश्चैते महोदया इत्यपि सानन्दमेव ब्रूमः । किन्तु यावन्त एते समपेक्ष्यन्ते न किल तत्तुरीयांशमिता अप्याद्यापि विशालतमे संस्कृतभाषायाः कुलभवनायमानेऽपि भारते वर्षे संपन्ना इति नूनमतिमात्रमेव चिन्नीयते नश्चेतः । हन्त भो एवंविधा किलैषा दशाऽत्र भारते वर्षे संस्कृतभाषाया यदेतन्मय्याः पत्रिकायाः शतमपि ग्राहका विना प्रयासं न संपद्यन्ते । यदि पुनः कोपि बी. ए. एम्. ए. प्रभृतिभिरुपाधिभिरलङ्कृतो भारतवर्षीयो वैदेशिकोऽपि वा कुशूलशीर्षः समभिलष्यन् प्रकटयितुं हूणभाषामयीं पत्रिकां प्राकाशयिष्यद्विज्ञापनं तदा नूनमस्य संख्यातिगामिनो ग्राहकाः समपत्स्यन्त । संदृश्यन्ते च परोलक्षा ग्राहकमहाशयाः केषाञ्चिद्वैदेशिकपत्राणाम् । येपि च समुपस्थिता भारतं वर्षं तत्रत्यैरेव द्रव्यैः पूरितोदराः

सुमुद्वमन्ति प्रत्यहं संस्कृततमानि गालीसहस्राणि सुखं खल्वेतानि क्रीयन्ते भारतीयाङ्ग्लसंवादपत्राण्यन्धप्रायैर्भारतवर्षीयैः। शिरसि भारायमाणमपि मूल्यमेतेषां लब्ध्वेव मन्यन्तेऽमी अस्थानवर्षिणः प्राज्ञाः। स्वदेशीयं पुनः स्वल्पमूल्यलभ्यमपि पत्रं परित्याज्यं मन्यन्ते। प्रार्थिता अप्येतद्ग्रहणे शिरसि शूलमिवाविष्कुर्वन्ति। अपात्रे चायमर्थोत्सर्ग इत्याकलयन्ति। अविदुष एव च संभावयन्ति संपादकान् स्वदेशीयपत्राणाम्। प्रलपन्ति च नैतानि यथाकालं प्रचरन्ति। न चैतेषु हृदयाह्लादकं मुद्रणसौष्ठवं भवति। न चैतेषां पत्राणि सुश्लक्ष्णचिक्कणानि दृश्यन्ते। नाप्येतानि नवनवविषयसमुद्भासितानि संलक्ष्यन्ते। अत एव च नाद्रियन्त एतान्यस्माभिरिति। प्रियपाठकमहाभागाः! प्रलापोऽयमेतेषामापाततः संवीक्षितः सोपपत्तिकश्च हृदयहारी च प्रतिभाति। यथायथा पुनरयमारोप्यते सरणिं विचारस्य तथातथाऽवश्यमाविष्करोत्यात्मनो निःसारतमत्वम्। तथा हि। अवितथं खल्वेतद्विद्यत एवंविधाऽवस्थितिः केषांचित्स्वदेशीयपत्राणामिति किन्तु दशायामस्यामेतेषां भारतवर्षीयाणामेवास्थूललक्ष्यत्वं हेतुः। एते हि नैतानि यथावदवलम्बयन्तीति। ग्राहकजनावलम्बनमात्रायत्तं च जीवितं च सौष्ठवं च बहुपत्रत्वं च मनोहरत्वं चैतेषाम्। यदि हि सम्पन्नैर्ग्राहकैरमीषां यथाकथमपि मुद्रणव्ययोऽपि न शक्येत निर्वाहयितुं तदा कुतस्तावत्सौष्ठवादिकमापाद्येत। भूयस्त्वादेव च ग्राहकाणामावहन्ति सौष्ठवातिशयं वैदेशिकानि पत्राणि। प्रचुरतरं च द्रव्यं ग्राहकगणादधिगच्छन्तो वैदेशिकाः प्रदाय भूयिष्ठं धनं पुरस्कारात्मना तेभ्यस्तेभ्यः प्रबन्धृप्रकाण्डेभ्यः सम्पादयन्ति मनोहरतमान्प्रबन्धान्नानाविधान्। न किल नैतद्विदितं हूणभाषाविदां यत् टिड्बिट्स्संज्ञकस्य पत्रस्यैकपृष्ठपर्याप्तं साधीयांसं प्रबन्धं प्रेरयन्तो विंशतिसमधिकानि रूप्यकाणि विन्दन्तीति। भारतवर्षीयाणां पुनः पत्रमशेषमपि रसिकजनमूर्धान्दोलनपटिष्ठैः प्रबन्धैः पूरयतां जठरपरिपूर्तये व्यवसायान्तरावलम्बनमवश्यकरणीयतामापतति। अत्र च केवलं धनवतामपि रसविदां भारतवर्षीयाणां घनतममौदासीन्यं निदानमिति नो बुद्धिः।

यदि हि समुपलभ्येरन्नसंख्येया ग्राहकमहोदयास्तदा किमिति वा नासादयेयुः सर्वाङ्गीणं रामणीयकं भारतवर्षीयाः पत्र्यः। न किल प्रज्ञा नाम केवलं वैदेशिकेष्वेव विधात्रा निहिता येन समधिगतार्थाः स्वास्थ्यमापन्ना अपि भारत-

वर्षीयाः स्वीयपत्रिकासु मानोज्ञकमाविष्कर्तुं न प्रभवेयुः । किन्तु द्रव्यमात्रायत्तं सर्वाङ्गीणरमणीयतापादनं ग्राहकजनानुग्रहमात्रायत्तश्च पत्रिकाणां द्रव्याधिगमः। तदभाववशादेव च हीयमानकान्तीनि व्याकुलीभवन्ति प्रत्यहं स्वदेशीयानि संवादपत्राणीति जानन्तोऽप्येतन्न जानन्ति प्रज्ञावन्तो भारतवर्षीयाः। एवं गते प्रचारितपूर्वाणामपि पत्रिकाणां प्रकाशने कष्टायमानाः संपादकाः कथं नाम नव्याः पत्रिकाः प्रकाशयितुं प्रभवेयुः । कथं च मनसि चेष्टमानोऽप्यमीषां मनोरथहतकोऽनधिगतावलम्बस्तत्रैव न जीर्येत । तदेतदपि नाश्चर्यं यत्कालमेतावन्तं नाविष्कृतवत्यात्मानं सूनृतवादिनीति । सत्यप्येवं नाद्यापि विलीनोऽस्माकमुत्साहो न चापि जीर्णतामुपगता प्रत्याशा । अद्यापि ननु संभाव्यतेऽस्माभिरचिरादेवैषा प्रकाश्येतेति । प्रार्थयामहे च साञ्जलिबन्धं रसिकान्यत्स्वीकृत्य प्रणयित्वमेतस्याः प्रोत्साह्य चास्मान्सम्पाद्यतां कियताप्यंशेन संस्कृतभाषायाः समुज्जीवनजन्यं श्रेय इति । यदि च स्यादस्या अनुकूलो विधिस्तदा सेयमचिरादेव प्रकाश्येत । चन्द्रिकायाश्च प्रणयिमहाभागाः संपादयन्तु ग्राहकमेकैकमेतस्याः समासादयन्तु च प्रतिसप्ताहं नवं नवमानन्दमित्यावेद्यतेऽस्माभिः । आदर्शमप्यस्या आगामिन्या चन्द्रिकया सह प्रकाशयितुमिच्छामः । एवं च यदसौ सूनृतवादिनी कालमेतावन्तं न प्रकाशिता तत्र केवलं प्रणयिजनानधिगमो हेतुर्नान्य इति ब्रूमः । ये च समनुयुञ्जते सूनृतवादिनीं प्रति समुत्कण्ठिता रसिकप्रवरास्तान्प्रति ब्रूमः प्रियमहाभागाः ! एवं नन्वेतदिति प्रतीक्ष्यतां कियांश्चित्समयो येन पूर्येत वः प्रशस्यतमो मनोरथ इति शिवम् ।



॥ श्रीः ॥

# सरस्वतीस्तोत्रम् ।



यामुच्चकैः स्तोतुमलं स्वरच्युतेर्भीतास्तु तूष्णीं मुकुटैर्दिवौकसः ।
विभूषयन्त्येव तदङ्घ्रिपङ्कजं तस्यै सभक्ति प्रणतिर्मुहुर्मम ॥ १ ॥

विपञ्चिकावादनमग्नचेतसो यस्याः स्फुटद्दक्षिणपादपङ्कजम् ।
प्रकम्पते मञ्जुलतालदानतस्तस्यै सभक्ति प्रणतिर्मुहुर्मम ॥ २ ॥

निनादयन्ती मधुरं सुवल्लकीं भावे निमग्ना खलु याऽन्तरान्तरा ।
निमीलिताक्षी च मनाक्स्फुटेक्षणा तस्यै सभक्ति प्रणतिर्मुहुर्मम ॥ ३ ॥

यस्याः समन्ताद्विविसत्कदम्बकं माहात्म्यमात्रं विदितुं समागतम् ।
वीणामृदुस्वानरसे निमग्नवच्चित्रायमाणं प्रणतोऽस्मि तत्पदे ॥ ४ ॥

तस्यै नमः पादसरोजसौरभप्रलुब्धगीर्वाणमधुव्रतव्रजैः ।
यस्याः समन्तादविचार्य गौरवं संघृष्यतेऽन्योन्यमभीष्टसिद्धये ॥ ५ ॥

नमोऽस्तु तस्यै सकृपाकणेक्षणाद्विरिञ्चिनारायणशूलपाणिभिः ।
सृष्टिस्थितिप्राहृतिकर्म मञ्जुलं विधापयन्त्यै जगतां निरन्तरम् ॥ ६ ॥

चञ्चलभगिनीवादं मातर्मर्षय दययेति विधुः पतितः ।
चन्दनचर्चितचिह्नितयुक्तश्चरणे यत्र तु तत्रास्मि नतः ॥ ७ ॥

मातः सुचिरं क्रीडासक्तः शिशुरयमतिशयमेव क्लान्तः ।
संप्रति शान्त्यै प्रत्यायातः स्नेहकृपाममतामप्यभितः ॥ ८ ॥

क्रीडासौख्यं दुःखनिदानं मातरहं संप्रति प्रमाणम् ।
मामाक्रामति गाढाज्ञानं सहायुषा च दिवसावसानम् ॥ ९ ॥

त्वमेव रोदयसि च शान्तयसि स्मापयसि शोकमप्यपनयसि ।
उन्नमयसि नमयसि निर्णयसि त्रिजगन्मातः सर्वं सृजसि ॥ १० ॥

त्वमेव कारय धारय पालय भासय जापय दापय हारय ।
स्थापय शासय नाशय तारय सर्वं कुरु यो यो भवदाशयः ॥ ११ ॥

सौन्दर्येण च माहात्म्येन ब्राह्मि ! गुणेन च विभूषणेन ।
अजितजगति ! जगति सदृश्येन ध्रुवमलमिह हि तव वर्णनेन ॥ १२ ॥

यदपि जननि जनगणोपकृतये
निराकृते साकृतिरसि सदये ।
निरुपमसुरूपवर्णनविषये
कः खलु शक्तस्त्रिजगन्निलये ॥१३॥

मातरमीषामुपमा चैते
तथोपमानमुपमेयमपि ते ।
मातस्त्वमेव तेषां विवृते
प्रभवासि भारति तीव्रक्षमते ! ॥ १४ ॥

सरोजचरणे सरोजपाणे !
सरोजनयने सरोजवदने ।
सरोजभूषे सरोजरूढे
सरोजमयि मयि प्रसीद मूढे ॥ १५ ॥

कमलस्रगियं हृदये येषां
राजति किं न हि सिध्यति तेषाम् ।
या हि विराजति हृदये विदुषां
विधिहरिहराश्च तुल्या नैषाम् ॥ १६ ॥

भूषा मौलेर्जनानां न हि मणिमुकुटः स्रग् हृदो वा गलस्य
कर्णद्वन्द्वे च लोले कनकमणिमये कुण्डले कुन्तलान्ते ।
बाह्वोश्चैवाङ्गदो वा करकमलयुगे कङ्कणे वातिरम्ये
वक्त्रे ताम्बूलरागः किमधिकमपरं वस्त्रमङ्गे च नैव ॥१७॥

एका रम्या विचित्रा स्रगिति परतरा भूषणं रत्नरम्या
शीर्षे कण्ठे मुखे वा श्रवणनयनयोर्वक्षसो बाहुयुग्मे ।
पाणिद्वन्द्वारविन्दे बहिरबहिरियं सर्वदेहे च गेहे
प्रत्युत्पत्ति त्रिलोके स्वपरिजनगणानां च खल्वेकसंस्था॥१८॥(युग्मकम्)

स्रग् वाग्युद्धेऽन्ययुद्धे परमपि करणं घोटका वा गजा वा
नो शस्त्रं नैव सैन्यं धनुरसिरपि वा नैव बाणा रथा वा ।
नो वा सेनापतिर्वा न च निपुणतरः सारथिः सन्नहो वा
ढक्काकंसादिवाद्यं रणबलमपि नैवामुनाऽपेक्षणीयाः ॥ १९ ॥

एतत्स्रग्वी प्रवीरः स जयति सकलं राजगेहे रणे वाऽ-
रण्ये पातालमूले दिवि भुवि च किमन्यत्र वक्तव्यमस्ति ।
कामक्रोधादिशत्रून् प्रचुरबलवतो लीलया दिग्विजेता
वाल्मीकिर्व्यासमुख्यो यदि न हि कथमद्यापि पूज्येत भूपैः ॥ २० ॥

स्रग्वी बालो युवा वा श्रवणनयनवाग्घीनको नष्टनासः
खञ्जः कृष्णो घृणार्हः परिणमितवया अप्यहो वातिवृद्धः ।
दन्तैः केशैश्च हीनः प्रविचलितकरन्यस्तदण्डश्च कुब्जः
भूपो गोपालको वाऽनवरतमपि संशोभते मोदते च ॥ २१ ॥

क्षुधा तृष्णा दूरं व्रजति भजते शान्तिमतुलां
सुधासारं नित्यं प्रपिबति न पीडामनुभवेत् ।
अथानन्दं नित्यं जनयति सुकीर्तिं जनधना-
द्यखण्डं चाऽव्यक्तं स खलु लभते ब्रह्म परमम् ॥ २२ ॥

यष्टिः खञ्जस्य चक्षुर्हतनयनधनस्यामृतं रोगिणश्च
शान्तिः शोकातुरस्य श्रुतिरपि बधिरस्यायुधं शत्रुगस्य ।
क्षुत्तृष्णार्तेः सुधैवं विपदि च पततो धैर्यमार्यस्य प्राणा
राज्ञो मन्त्री विदेशं व्रजत इयमहो अद्वितीयः सहायः ॥ २३ ॥

नानादेशागतक्ष्मापतिमणिमुकुटैर्मण्डिताङ्घ्रिर्महौजाः
कौलेयः कामतुल्यः सुतधनयुवतिप्रीतिमग्नस्तवरुग्णः ।
स्वाद्वन्नाशी च शायी मृदुतरशयने स्त्रीसमालिङ्गितो वा-
प्येतद्वित्तेन हीनो विपुलतरधनो हन्त जीवन्मृतोऽसौ ॥ २४ ॥

स्रजैतया हीनगृहीतजीविता-
स्त्वनर्घ्यरत्नाङ्घ्रिशिरोविभूषिताः ।
श्रियान्विता वीर्यसमायुताश्च वा
राजन्त एते धनिकुक्कुरादिवत् ॥ २५ ॥

क्व वा कदा वेद्दशशस्त्रवानपि
स्रग्वी किलासौ विधिदुर्विपाकतः ।
हा हन्त कालस्य तु वा प्रभावत-
स्तथैव हीनैः पशुभिर्जनैर्जितः ॥ २६ ॥




शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

त्रयोदशखण्डस्य ] १८२८ शाकश्रावणमासस्य [ पञ्चमी संख्या

## मासावतरणिका ।

उद्गच्छन्तं नभसि नभसि प्रेक्ष्य धाराधरौघं
वल्गद्बर्हं नटति शिखिनां प्राप्य यूथे कदम्बम् ।
आशङ्कन्ते वनभुवि जनाः किं नु भूमीरुहाग्रा-
देतच्चित्रं प्रभवति धनुःखण्डमाखण्डलस्य ॥

## सुभाषितानि ।

तृषं धरायाः शमयत्यशेषां यः सोऽम्बुदो गर्जति गर्जतूच्चैः ।
यस्त्वेककस्यापि न हंसि तृष्णां स किं वृथा गर्जसि निस्त्रपाब्धे ॥

उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो-
स्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि यत् ।
ततः कुम्भौ पश्चाद्बिसकिसलये कन्दलमये
तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥

कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते ।
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥

शैवलपिच्छिलदृषदं मामेव प्रेषयत्यसौ वापीम् ।
भङ्क्ष्यति मे वलयाली प्रतिवेशिनि साक्षिणी भूयाः ॥

कीटगृहं कुटिलोऽन्तः कठिनः क्षाराम्बुसंभवः शून्यः ।
शङ्खः श्रीपतिनिकटे केन गुणेन स्थितिं लेभे ॥

श्रीशिवः शरणम् ।

# भावप्रकाशः ।

इह किल विद्यमानेष्वपि तेषु तेषु शास्त्रेषु व्याकरणमेव प्राधान्यमाटीकत इति नात्र स्तोकोऽपि सन्देहः । शास्त्राणि हि नाम निखिलान्यपि न हि विना विशुद्धां वाचं संग्रथ्यन्ते । नापि विना व्याकरणं भाषा विशुद्धिमुपयाति । प्राचीनतमानि प्राचीनान्यर्वाचीनानि च बहून्येवात्र व्याकरणान्युद्भासन्ते । एतेष्वपि पाणिनीयमेव सर्वोत्तरमिति नात्र कोपि विशयावसरः । साशिरःकम्पं हि श्लाघ्यते समस्वरमेव सर्वैरप्येतद्व्याकरणमिति । सूत्राणि चास्य विपुलतमार्थ-गर्भितानि स्वल्पाक्षराणि चेत्येकान्तत एव दुर्बोधानि । तदेतन्नावश्यकमेवाख्यातुं यद्व्याख्यानसापेक्षमेव ज्ञानमेतेषामिति । सन्ति चात्र भूयांसि प्राचीनान्यर्वाची-नानि च व्याख्यानानि विद्यते च भाष्यमपीति विदितमेवैतदशेषाणामक्षरमु-खानाम् । तत्र तावत्तत्र तत्रानेकेषामर्थानां ज्ञापनाद्व्याख्यानसापेक्षं च दुरवगमं च भाष्यं नाम । न हि विनाचार्यानुग्रहं हृदयमस्य ग्रहीतुं शक्यम् । काशिका-दयश्च वृत्तयो यद्यपि हृदयङ्गमा एव तथापि न किल न व्याख्यानसापेक्षाः । याश्च नामासां व्याख्याः पदमञ्जर्यादयो न किल ता अपि विना गुरूपासनं प्रविशन्ति हृदयं छात्राणाम् । किं च काशिकामिताक्षरादयः किल व्याख्या अनुसृत्य पाणि-नीयं सूत्रक्रमं रचिताः । यश्च सूत्राणां क्रमो नासौ सन्ध्यादितत्तत्प्रकरणोपका-रकाणि तानि तानि सूत्राणि झगित्येवोपस्थापयितुं प्रभवति मनस्यध्येतॄणाम् । अतश्च विभज्य क्रममेनं छात्रजनोपकारकयैव शैल्या संग्रथ्य प्रकरणानि चेत्कापि वृत्तिः प्रणीयेत भूयानेवोपकारः सम्पद्येत जिज्ञासूनामिति मनसिकृत्य संग्रथि-तेयं सिद्धान्तकौमुदी नातिप्राचीनैः पदवाक्यप्रमाणपारावारपारीणैः श्रीदीक्षित-चरणैः । वृत्तिः पुनरियं नातिविस्तृता चान्तरान्तरा नितान्तमेव दुर्बोधा चेति नैतत्परोक्षं प्रेक्षावताम् । अतश्च सेयमपि न किल नापेक्षते व्याख्यानम् । यानि च नामास्या विद्यन्ते व्याख्यानानि न खलु तेष्वेकमप्यर्हति षोडशीमपि कलां भावप्रकाशस्यारोढुमिति द्रढीयसी नो बुद्धिः । स्वरूपमेवैतदेतस्याख्याय-तेऽस्माभिर्न पुनरन्याधिक्षेपायैवमुदीर्यते । जानीमो हि वयं सौष्ठवं शेखरादी-नाम् । किन्तु प्रगल्भमतिमात्रोपकारकाणि व्याख्यानान्येतानि न किल विदुषा-मिव च्छात्राणामपि मनो रञ्जयितुं प्रभवन्ति । यानि च बालमनोरमादीनि तानि खलु सरलतयाऽर्थप्रतिपादकानि नातिमात्रमपाकर्षन्त्यन्तरङ्गं नानाविधशा-

स्त्रानुशीलनपटीयसां विदुषाम् । भावप्रकाशः पुनः सरलेनैव पथा विवृणोत्यर्थं प्रकाशयत्यनुवृत्तिं प्रबोधयति पदादिसंबन्धं निर्वक्ति पदानि निराकरोत्याशङ्कां लक्षयति च विशदगम्भीरया शास्त्रीयया रीत्या लक्ष्याणीत्युपकुर्वन्नेव च्छात्राणां शास्त्रान्तरगतमपि प्रसक्तं विषयं सुनिपुणं व्याचक्षाणः परपक्षव्युदासमप्याकलयन्विवृण्वन्दीक्षितहृदयं समुदञ्चयति चतुरचेतसां चमत्कारमित्यनुभववेद्य एवायमर्थः प्रेक्षावताम् । सर्वथाऽवितथं किलोक्तं भावप्रकाशं प्रति—सुनिपुणं च विलोडयमानायां तस्यां यत्सत्यं नास्माकमारोहन्ति चेतःपदवीं व्याख्यानान्तराणि । इयं हि अनुवृत्तिप्रदर्शनवाक्ययोजनादिना दाक्षिणात्यश्रीवासुदेवकृतबालमनोरमाव्याख्यामनुसरन्त्यपि न तद्वद्रूढमूलदाक्षिणात्यसंप्रदायशिथिला नापि शब्देन्दुशेखरवाक्योद्धारवञ्चिता तत्तदर्थपरिष्कारनिष्कृष्टार्थादीनि प्रदर्शन्त्यपि न शब्देन्दुशेखरवद्दुरवगाहा न वा क्वचिदप्याग्रहकलुषिता प्रौढमनोरमेव परपक्षव्युदसनव्यसनिन्यपि न विषयान्तरविमुखी सती शिरःशूलस्य जननी नव्यनव्यानि शङ्कासमाधानानि स्वयमुल्लिखन्त्यपि न चन्द्रिकेव केवलं तावन्मात्रचरितार्थेत्यादि । शक्यं चैतदतीतचन्द्रिकासंख्यया सह प्रेरितात्क्रोडपत्रादवगन्तुं जिज्ञासुभिः । तत्र हि प्रकाशितः कियांश्चिदादर्शभूतो भागो भावप्रकाशस्य । यत्र च प्रघट्टके प्रकाशितोऽयं भावप्रकाशस्तत्रैव कीदृशी बालमनोरमेति चेद्विज्ञायेत सुधीभिस्तदा विनैव प्रयासं शक्येत भावप्रकाशस्य च बालमनोरमायाश्च स्वरूपमवबोद्धुं कतरा चानयोर्ज्यायसी व्याख्येति च विज्ञातुमिति सोऽयं भागः सम्प्रति संस्कृतचन्द्रिकायाः प्रियपाठकमहाभागानां नयनसरणौ क्रियतेऽस्माभिः । यथा—

हलन्त्यम् । १ । ३ । ३ । हलितिसूत्रेन्त्यमित्स्यात् ।

ननु चतुर्दशसूत्र्यां णकाराद्यन्तवर्णानां इत्संज्ञा प्रतिज्ञाता **एषामन्त्या इतः** इति । तदनुपपन्नम् । तेषां हि हलन्त्यमिति सूत्रेणेत्संज्ञा वक्तव्या तच्च सूत्रं हल्पदार्थावगमोत्तरमेव प्रवृत्तिमर्हति । हल्संज्ञा च हलितिसूत्रे लकारस्येत्संज्ञायां सत्यां आदिरन्त्येन सहेतेति सूत्रेण वाच्या । हलिति सूत्रे लकारस्येत्संज्ञा च हलन्त्यमिति सूत्रेणैव वाच्या । एवं च हलिति सूत्र लकारस्येत्संज्ञायां सत्यां आदिरन्त्येन सहेतेति हल्संज्ञासिद्धौ हलन्त्यमितिसूत्रप्रवृत्तिः । हलन्त्यमितिसूत्रेण हल्सूत्रे लकारस्येत्संज्ञायां आदिरन्त्येनेति हल्संज्ञासिद्धिरित्येवं हलन्त्यमादिरन्त्येनेत्यनयोः परस्परसापेक्षत्वेन अन्योन्याश्रयत्वादबोधः । एवं च हल्संज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य केनचित्सूत्रेणेत्सज्ञामबोधयित्वा हलन्त्यमिति हलामित्संज्ञाबोधनं पाणिनेरयुक्तमित्याशङ्क्य हल्संज्ञामनु-

पजीव्यैव हल्सूत्रे लकारस्येत्संज्ञां विधातुं हलन्त्यमिति सूत्रं द्विरावृत्य प्रथमसूत्रमुपक्षिपति । हलन्त्यमिति । एकपदं सूत्रम् । हलि अन्त्यमिति विग्रहः । शौण्डादेराकृतिगणत्वात्सप्तमीशौण्डेरिति समासः । सुप्सुपेति समासो वा । हल्पदमिह सूत्रपरम् । उपदेशेऽजनुनासिक इदिति पूर्वसूत्रात् इदित्यनुवर्तते । तदेतदाह हलिति सूत्र इत्यादिना । इत्स्यादिति । इत्संज्ञकः स्यादित्यर्थः । संज्ञाप्रस्तावात् । एवं चानेन सूत्रेण हल्सूत्रे लकारस्य हल्संज्ञामनुपजीव्यैव इत्संज्ञा सिद्धेति नान्योन्याश्रय इति भावः ।

**लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारेष्वितां न ग्रहणम् ।**

तदेवं लकारस्यानुनासिकत्वादित्संज्ञा सिद्धा । ततः किमित्यत आह । लण्सूत्रस्थेति । लण्सूत्रे तिष्ठतीति लण्सूत्रस्थः स चासाववर्णश्च लण्सूत्रस्थावर्णः । तेन सहोच्चार्यमाणो रेफः र इत्येवंरूपः रेफरलयोः संज्ञेत्यर्थः । वस्तुतस्तु रप्रत्याहार एव नास्तीति शब्देन्दुशेखरे व्यक्तम् । ननु आदिरन्त्येनेत्येतत्सूत्रे मध्यगानामादेश्च संज्ञेति स्थितम् । एवं चाजादिप्रत्याहारेषु संज्ञाकोटिप्रविष्टानामन्त्यानामितां ग्रहणाभावेपि णकारादीनामपि मध्यमत्वाविशेषात् ग्रहणं स्यात् । ततश्च रलयोः संज्ञेति पूर्वग्रन्थे रलयोरिति न्यूनं टकारस्यापि मध्यमत्वेन ग्राह्यत्वादित्यत आह । प्रत्याहारेष्वितां न ग्रहणमिति । इति ।

एतावतां च शक्येतैवात्रबोद्धुं प्रज्ञावद्भिर्यद्भूयांस एव प्रतिपादिताः प्रसङ्गसङ्गतास्ते ते विषया भावप्रकाशे ये किल नाम्नापि बालमनोरमायां नोल्लिखिता इति । हलन्त्यमित्यत्र नान्योन्याश्रयः परन्तु चक्रकमेवेति केषांचिन्मतं नानया प्रत्याख्यातं प्रत्याख्यातं च भावप्रकाशेन । रप्रत्याहारे च प्रत्याहारान्तरेष्विवादिवर्णस्य स्वरान्तस्यैव रेफस्य ग्रहणे ततः परं चेतोऽकारस्य प्रयोगे सवर्णदीर्घे च रा इत्येव प्रत्याहारः कुतो नेति कथं च र इत्येवेति नैतद्विशदीकृतं बालमनोरमया विशदीकृतं तु भावप्रकाशेनैव । एवमपि नावहति काठिन्यं नाम भावप्रकाशः । किमधिकं नानाविधशास्त्रीयप्रबन्धप्रणेता श्रीमान्कृष्णभट्ट एवास्याः प्रणेतेत्येतावतैव शक्येतास्याश्चारुतामनुमातुं प्रज्ञैरिति नात्र विशेषतः किमपि वक्तुमिच्छामः । न चैतावता दूष्यतेऽस्माभिर्बालमनोरमेति संभाव्यतां केनापि । बालमनोरमा ह्यसौ । अत एवान्वर्थयन्त्यात्मनः संज्ञां नांशतोऽपि प्रवर्तते जटिलतमेषु नव्यशङ्कोद्भावनतत्समाधानादिषु विषयेषु ।

यत्तूक्तं भावप्रकाशिकापरपर्यायं भावप्रकाशमिमं स्वप्नेऽप्यनाघ्रातवता ततोपि बालमनोरमामेव विशेषयितुमभीहमानेन केनापि एतत्प्रबन्धस्तत्ववक्तृव्यवचन-

वक्तव्यपरित्यागादिदोषकरम्बितप्रकाशिकादिक्षुद्रप्रबन्धवन्न सहृदयवैमनस्यदायीति तदेतन्मात्सर्यमात्रमवबोधयति प्रत्याययति च क्षुद्रतां वक्तुरिति निर्मायमेव ब्रूमः ।

एवंविधानां च संस्कृतभारतीजीवितसर्वस्वायमानानां प्रबन्धानां प्रकाशनं नामेदं प्रधानतमं कर्तव्यं प्रेक्षावतां प्रथमं चैतदनुष्ठेयं निखिलानामपि संस्कृतसरस्वतीप्रणयिनां तत्र साहाय्याधानं नाम । अतश्च सप्रणयं च सोपग्रहं च प्रार्थयामहे संस्कृतचन्द्रिकायाः प्रणयिमहाभागान्यदवश्यं संगृह्यतां प्रबन्धोऽयं श्रीमद्भिरिति । अपरः किलायं व्याकरणाचार्यो भावप्रकाशो नाम । अयं हि सम्यगेवावबोधयति रहस्यं व्याकरणस्येति । अथवा सोऽयमवश्यमाचार्यमप्यतिशेते । आचार्यो हि स्वेच्छानुसारं नियतकालमेव पाठयेच्छात्रं न पुनर्यदा यदा छात्रमनस्युदयेताभिलाषस्तदा तदाऽध्यापयेदेव । नापि तं तमेवार्थं द्विस्त्रिश्चतुस्ततोऽपि वाधिकवारं पृष्टो न कोपं विन्देत । भावप्रकाशः पुनर्यदा कदा वाप्यसकृदपि वा जिज्ञासुनाऽऽसेव्यमानः पूरयेदेव तं तमभिलाषं तस्य । कियत्कालमात्रावस्थायी चाचार्यश्चिरकालवर्ती पुनर्भावप्रकाश इति । अत एव चैवंविधस्य प्रबन्धरत्नस्य कृते प्रतिमासं केवलस्य रूप्यकार्धस्य व्ययो नाम न किंचिदिदामित्येव नो बुद्धिः । सप्रमोदं च सोत्साहं च प्रदायैतत्संगृह्णीयुरविनश्वरामिमं व्याकरणोपाध्यायं जिज्ञासव इत्यस्ति नो गरीयान्विश्वासः ।

बालमनोरमा तु श्रीमता चन्द्रशेखरशास्त्रिणा प्रकाशिताऽपि श्वदृतिगतमिव भागीरथीसलिलं न कथमपि वैदिकधर्मानुयायिनामादरणीयतां विन्देत । एषा हि तेषां मुद्रायन्त्रे मुद्रयितुमुपक्रान्ता शास्त्रिप्रवीरेण ये किल गृहीतदीक्षाः सनातनभारतधर्मोद्ध्वंसे येषां च गोमांसप्रणयिनी जिह्वा श्रुतिगर्हणैकव्रता वाणी आर्याचारनिर्मूलनाभिलाषिणी च प्रज्ञा । किमधिकं परमात्मनः प्रतिमावलोकनमपि येषां शिरसि शूलमुत्कोपयति यथाभिलषितधनप्राप्तावपि संमुद्र्यमाणेषु परकीयेष्वपि वैदिकधर्मानुयायिनामपि प्रबन्धेषु मङ्गलस्य श्रीशब्दादेरपि च मुद्रणं यैर्नानुष्ठीयते कथंचिदपि । यैश्च परित्याजिताः स्वधर्मं द्विजन्मानः । एते च धर्मोपदेशकाः ख्रिस्तीयाः । न जानीमः किमिदानीं नामशेषतामुपगता आर्यधर्मानुयायिनां मुद्राशाला इति येनायं द्विजन्मापि वैदिकपथानुयाय्यपि च सन् शास्त्रिप्रवरः ख्रिस्तीयधर्मोपदेशकानामेव मुद्रायन्त्रे संमुद्र्य वेदाङ्गप्रबन्धं कलुषीकरोति धर्ममर्यादां प्रदाय च ख्रिस्तीयधर्मोपदेशकेभ्यः साहाय्यमर्जयति स्वधर्मोद्ध्वंसनदुरितं कामत एव । हा धिक्कष्टं किमिदानीमवलम्ब्य प्रवर्ततां भगवान्वैदिको धर्मो यदि ब्राह्मणा अप्येवमकार्यमन-

तिष्ठेयुः । सर्वथा प्रभवति शिथिलीकृतधर्माचारः कलिकालः । यथा च ख्रिस्तीयानां मुद्रायन्त्रेषु संमुद्रणमेवं तन्मुद्रितप्रबन्धसंग्रहोऽपि पापमात्राधायक एवेति नैतन्न जानीयुर्धार्मिकप्रवराः । अत एव च संभाव्यतेऽस्माभिः संमुद्रितापि शास्त्रिणा नासादयेदादरणीयभावं सनातनभारतधर्मप्रणयिनां बालमनोरमेति । अत एव च विज्ञाप्यते साञ्जलिबन्धं शास्त्रिप्रकाण्डोयमस्माभिर्यदवश्यं परित्यज्य ख्रिस्तीयानां मुद्रायन्त्रमन्यत्रैव संमुद्र्यतां प्रबन्धोऽयं प्रियमहाभागेनेति । अन्यथा हि गरीयसी हानिः संपद्येत । यदि नान्यत्र शक्येत मुद्रयितुं निवेद्यतां तर्हि येनास्मद्देशीयेषु मुद्रायन्त्रेष्वसौ संमुद्र्येत । परं परस्तादिति शिवम् ।



श्रीशिवः शरणम् ।

# मुनिप्रवरः श्रीपाणिनिः ।

( पूर्वतोऽनुवृत्तः । )

एवं च वर्षस्य नामाचार्यस्य च्छात्रोऽयं मुनीन्द्रः श्रीपाणिनिः । वर्षश्च श्रीमाण्योगनन्दस्य नाम नन्दवंशीयस्य चरमस्य भूपतेः सभ्य इति बृहत्कथानुरोधेन संग्रथितात्कथासरित्सागरतो विज्ञायते । ततश्च योगनन्दसमसामयिक एवाचार्यः श्रीमान्पाणिनिरिति सुस्पष्टमेवैतत् । अतश्च निर्णीते योगनन्दसमये तत्समानकालिकस्य श्रीमतः पाणिनेरपि समयः सुनिर्णीतो भवतीति तमेवादितो निर्णेतुमिच्छामः ।

तत्र तावत्कि वाऽत्राभिप्रेयते दत्तमहाशयप्रभृतिभिर्नव्यैरित्यादितो विचार्य परस्तान्मतमात्मीयं वक्ष्यामः ।

श्रीमान् रमेशचन्द्रदत्तमहाशयः किल प्राचीनभारते ख्रिस्तीयवत्सरारम्भतः पूर्वं चतुर्थ्यां शताब्द्यां नन्दोत्पत्तिरित्याह । आचष्टे च ख्रिस्ताब्दोपक्रमात्पूर्वं ३२० तमं वत्सरमुपक्रम्य ३७० तमवत्सरं यावन्नन्दानां शासनमिति । समयश्चायं पञ्चाशद्वत्सरात्मक एव । यत्तु पुराणादिषु समयोऽयं वर्षशतात्मक इत्यभिहितं तत्र शतपदं पञ्चाशत्परमेवेति दत्तमहाशयस्याभिप्रायः ।

एवं च ख्रिस्तवत्सरोपक्रमतः प्राङ्नन्दराज्यशासनान्तं यावदतीतेषु ३२० वत्सरेषु तदुपक्रमोत्तरमद्ययावदतिक्रान्तानां १९०९ वर्षाणां संकलनायां २२२९ वर्षाणि सम्पद्यन्ते । एतान्येव च श्रीमतो रमेशचन्द्रस्य मत इतः पूर्वं नन्दराज्यावसानं यावदतिगतान्यब्दानि ।

अत्र ब्रूमः । न किल क्वापि दृष्टमस्माभिः शतपदस्य संख्यासामान्यवाचित्वं नापि वा शतन्यूनसंख्याभिधायित्वं येनास्य पञ्चाशद्वाचिताऽप्यङ्गीकर्तुं शक्येत । शतपदस्यानन्तवाचितां तु स्वीकुर्वते वेदभाष्यादौ श्रीमन्माधवादयो विद्वत्तमाः । किन्तु नैते संख्यासामान्यवाचितां शतन्यूनसंख्यावाचकतां वास्य स्वीकुर्वन्ति । ततश्च विष्णुपुराणादिषु नन्दानां राज्यशासनाब्दनिर्देशेऽभिधीयमानस्य शतशब्दस्य पञ्चाशद्वाचित्वं न कथञ्चिदप्याख्यातुं शक्यमित्येवाकलयामः । किं च शतपदस्य संख्यासामान्यवाचित्वाद्यङ्गीकारे एकं वर्षशतमिति विष्णुपुराणीये वचन एकपदं व्यर्थीस्यात् । एतद्धि शतपदस्य शतान्यूनसंख्याभिधायकतां विस्पष्टयतीति । अतश्च हेयमेव श्रीमद्रमेशचन्द्रदत्तमतमित्यविशङ्कितमेव ब्रूमः ।

अथेदानीमभिधीयते कोऽयं समयो यत्राभिषिक्त आदिमो नन्द इति । अत्रोक्तं श्रीमति भागवते द्वादशस्कन्धे द्वितीऽयेध्याये—

**आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।**
**एतद्वर्षसहस्रं वै शतं पञ्च दशोत्तरम् ॥ इति ।**

पञ्चेति भिन्नं पदम् । तस्य च शतपदेऽन्वयः । ततश्च पञ्चशतमिति सिध्यति । एकवचनमार्षम् । एवं च परीक्षितो जन्मानन्तरमतीतेषु दशाधिकेषु पञ्चसु शतेष्वब्दानां नन्दस्य राज्याभिषेक इति सिद्धम् । परीक्षिच्च कलिप्रवृत्तिसमकालिको भूपालः । कलिश्च यदा मघासु सप्तर्षीणामवस्थानं तदा प्रवृत्त इति तेषां च प्रतिनक्षत्रं वर्षशतात्मको भोगकाल इति च श्रीमति भागवत इव पुराणान्तरेष्वपि सुस्पष्टतयाऽभिहितम् । यथा भागवते—

**ये त्वदीये द्विजाः काले अधुना चाश्रिता मघाः । इति ।**

त्वदीये पारीक्षिते । द्विजाः सप्तर्षयः । अधुनेति कालविशेषणम् । वैष्णवेऽपि—

**सप्तर्षीणां च यौ पूर्वौ दृश्येते उदितौ भुवि ।**
**तयोस्तु मध्यनक्षत्रं दृश्यते यत्समं निशि ॥**
**तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।**
**ते तु पारीक्षिते काले मघास्वासन्द्विजोत्तम ॥**

**इति ( ४-२४-३२ अ )**

नृणामब्दशतमिति संबन्धः । न तु दिव्यमब्दशतमित्यर्थः । युधिष्ठिरराज्ये च प्रवृत्तः कलिः । तदापि मघास्वेवासन्त्सप्तर्षयः । एवं च कलिप्रवृत्तितः शतसंवत्सरात्मक एव समये परीक्षितो जन्मेति सुस्पष्टम् । मघास्वेव सत्सु सप्तर्षिषु कलेः प्रवृत्तिस्ता एव चाधिष्ठितेषु तेषु परीक्षितो जन्मेत्युक्तत्वात् । ततश्च कलेः प्रवृत्तिसमयमारभ्य परीक्षिदुत्पत्तिं यावदतिक्रान्तः समयः प्रायेणाशीतिवत्सरात्मक इति प्रतीयते । ततश्च परीक्षिज्जन्मोत्तरं नन्दराज्याभिषेकं यावदतिगतेषु १५१० वर्षेष्वशीतेर्वर्षाणां संकलने सम्पन्ना १५९० वत्सराः । अयमेव च कलिप्रवृत्तितो नन्दाभिषेकान्तः समय इति स्पष्टम् । अत्र च नन्दानां राज्यशासनसमयस्यैकशताब्दीलक्षणस्य संकलने १६९० वर्षाणि सम्पद्यन्ते । अयमेव कलियुगारम्भतो योगनन्दवधान्तः कालः । अर्थात्कलियुगोपक्रमात्पाणिनेराचार्यस्यावस्थितिसमयं यावदतिक्रान्तः समयोऽप्ययमेवेति सुस्पष्टम् ।

अयमेव च समयः सुस्पष्टतयाऽभिहितः स्कन्दपुराणे । यथा--

**ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ।**
**भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति ॥ इति ।**

ततः कलियुगारम्भात् द्विसहस्रेषु वत्सरेषु मध्ये दशाधिके शतत्रयेऽवशिष्टे सतीत्यर्थः । एवं च २००० वर्षेषु ३१० वर्षाणां व्यवकलनायामवशिष्टा १६९० वत्सराः । अयमेव कलियुगारम्भतो नन्दराज्यावसानं यावदतीतः समय इति सिद्धम् । एतद्बलादेव च परीक्षितो जन्मनः प्राक्कलिवर्षाणामशीतेस्तीतत्वमभिहितमस्माभिः प्राक् ।

इतश्च कलियुगारम्भतो नन्दराज्यान्तं यावदयमेवातिक्रान्तः समय इति सुस्थिरीभवति । तथा हि । श्रीमति विष्णुपुराणे ये किल भाविनो भूपाला अभिहितास्तेषामयं क्रमः । परीक्षितः समसामयिको बृहद्रथवंशोद्भवो जरासन्धपौत्रः सहदेवः । तमारभ्य च वत्सराणां सहस्रमेकमनुशशास वसुन्धरां बार्हद्रथो वंशः । तदेतदभिहितं विष्णुपुराणे ( ४–२३–३ )—

**एते बार्हद्रथा भूपतयो वर्षसहस्रमेकं भविष्यन्ति । इति ।**

यश्चात्र बार्हद्रथे वंशेऽन्तिमो भूपालो रिपुञ्जयो नाम तं किल निहत्य शुनको नामामात्यः प्रद्योताभिधानमात्मनस्तनयं राज्येऽभिषिषेच । प्रद्योतवंश्याश्च भूपाला अष्टत्रिंशदुत्तरं शतमेकमब्दानां वसुन्धरां पालयामासुः । तदेतदुक्तं विष्णुपुराणे ( ४–२४–२ )—

**एतेऽष्टत्रिंशदुत्तरं वर्षशतं प्रद्योताः पृथिवीं भोक्ष्यन्ति ॥ इति ।**

ततः परं त्वलञ्चकार प्रद्योतानामेव भद्रासनं धराधीश्वरः शिशुनागो नाम । उपभुक्ता चास्य वंश्यैर्द्विषष्ट्यधिकं वत्सराणां शतत्रयं धरणिः । तदपि विस्पष्टतयोदितं तत्रैव । यथा—

**शैशुनागा दश भूमिपालास्त्रीणि वर्षशतानि**
**द्विषष्ट्यधिकानि भविष्यन्ति । इति ।**

ततः परं चादिमस्य महानन्दाभिधानस्य नन्दस्य राज्याभिषेकः । नन्दाश्च शतं वर्षाण्यासन्निति प्रोक्तं विष्णुपुराणे—

**महापद्मस्तत्पुत्राश्चैकं वर्षशतमवनीपतयो भविष्यन्ति ॥ इति ।**

एवं च परीक्षित्समकालिकात्सोमापेश्वरमं नन्दं यावत्संवृत्तानां चतुर्णां भूपतिवंशानामयं राज्यशासनसमयः । तथा हि—

| राजानः । | शासनवर्षाणि । |
|---|---|
| बार्हद्रथाः | १००० |
| प्रद्योताः | १३८ |
| शैशुनागाः | ३६२ |
| नन्दाः | १०० |
| संकलनया | १६०० |

अत्र परीक्षितो राज्यशासनतः पूर्वमतीतानां प्रायेण नवतेरब्दानां संकलने प्रोक्तपूर्वैव संख्या समुदेति ।

एवं च कलेः सप्तदश्यां शताब्द्यां परिसमाप्तिर्नन्दराज्यस्य । तस्मिन्नेव चावसरे भगवतः पाणिनेः प्रादुर्भाव इति स्पष्टम् ।

न चैवं—

**यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ।**
**तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥**

इत्येतद्वैष्णवीयमेव वचनं विरुध्यते । मघातो ह्येकादशं पूर्वाषाढानक्षत्रम् । ततश्च पूर्वाषाढागतेषु च सप्तर्षिषु नन्दराज्यमिति प्रतिपाद्यते निर्दिष्टपूर्वेऽस्मिन्पद्ये । प्रतिनक्षत्रं च वर्षशतात्मको भोगकालः सप्तर्षीणाम् । ततश्च कलियुगारम्भतो नन्दराज्याभिषेकं यावदेकादशैव शतानि वत्सराणामतिक्रान्तानीति स्फुटीभवति । इति वाच्यम् । पद्येऽस्मिन् तदा नन्दात्प्रभृति चेति चकाराध्याहारपुरःसरमेवार्थविधानात् । एवमपि नन्दात्प्रभृतीति वचनं निरर्थकमेवेति न भ्रमितव्यम् । ततःप्रभृति विशिष्यैवाभिवृद्धिः कलेरित्याशयस्यैव तदुपनिबन्धनहेतुत्वात् । भवन्मताङ्गीकारे च पुराणान्तरवचनविरोधो निर्दिष्टपूर्वविष्णुपुराणवचनानां च विरोधः कथंचिदपि परिहर्तुं न शक्येतेति ।

एवं च कलेः सप्तमशताब्द्यां पाणिनेः समुत्पत्तिर्निराबाधैव । इदानीं तु कलेः ५००७ वर्षाण्यतीतानि तत्र च निर्दिष्टपूर्वाणामब्दानां ( १६९० ) व्यवकलनायामवशिष्टाः ३३१७ संवत्सराः । अयमेव नन्दराज्यावसानमारभ्याद्ययावदतीतः कालः । अर्थात् मुनिप्रवीरस्य श्रीमतः पाणिनेरप्यवस्थितिसमयमुपक्रम्यायमेवाद्ययावदतिक्रान्तः समय इति स्पष्टम् । ( क्रमशः )

इत्यनवस्था स्यात् । न च व्यवस्थायां सत्यामनवस्था कल्पयितुं युक्ता गौरवप्रसङ्गात् । न च प्रमाणवत्त्वेन कल्पना गौरवमपि मृष्यत इति युक्तम् । संहतत्वस्य पारार्थ्यमात्रेणान्वयात् । दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्तिकतात्पर्यटीकायामस्माभिः (४)

तस्मात् अनवस्थाभिया अस्यासंहतत्वमिच्छता अत्रिगुणत्वमविवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वं चाभ्युपेयम् । त्रिगुणत्वादयो हि

---

व्यक्तसंग्रहः । तयोः विपर्ययः वैपरीत्यं तस्मात् अत्रैगुण्यादिरित्यर्थः । तात्पर्यमाह अयमिति । अभिप्रायः अभिसन्धिः तात्पर्यम् । तस्यापि संघातान्तरस्यापि । न केवलस्य पूर्वोक्तसंघातस्येत्यपिशब्दार्थः । तेनापि संघातान्तरेणापि । न केवलेन पूर्वसंघातेनेत्यपिशब्दार्थः । संघातान्तरार्थेन अन्यसंघातसाधकेन । तेन तेन संघातान्तरेण संघातान्तरेणेत्यर्थः । अनवस्थेति । अव्यवस्था । सा च अव्यवस्थितपरम्परारोपाधीना । कुत्रापि परमार्थतया विश्रान्तिर्न घटत इत्यर्थः । ननु बीजाङ्कुरवदस्त्वनवस्थेत्याह । न चेति युक्तमित्यत्रान्वयि । असंख्यातविश्रान्तिहीनसंघातकल्पनेनायुक्तत्वमिति । प्रमाणवत्त्वेन प्रमाणसिद्धत्वेन । मृष्यते सहिष्यते । अयुक्तत्वे हेतुमाह संहतत्वस्येति । तत्र संघातसंहतशब्दावेकपर्यायौ । पारार्थ्यमात्रेण परप्रयोजनसाधकत्वमात्रेण । न तु संघातप्रयोजनसाधकत्वेन । अन्वयात् समन्वयात् । तात्पर्यादिति यावत् । संघातत्वस्य परार्थत्वेनैवान्वयः न तु संघातात्मकपरार्थत्वेनेति मात्रपदतात्पर्यम् । ननु दृष्टान्तस्य शयनासनादेः संघातपरार्थत्वेन अत्रापि संघातपदार्थत्वमेव स्यात् न तु परार्थत्वमात्रमिति शङ्कायामाह दृष्टान्तेति । दृष्टान्ते दृष्टा ये सर्वे धर्माः तेषां अनुरोधेन अनुसारेण तद्रूपेणेत्यर्थः । उच्छेदप्रसङ्ग इति । सर्वधर्माणां न पक्षदृष्टान्तसाधारणत्वमपेक्ष्यते किन्तु हेतुसाध्ययोरेव । अन्यथा पक्षातिरिक्तदृष्टान्तासंभवः स्यात् । अन्यतः तत्तद्व्यक्तित्वरूपस्य विरुद्धधर्मस्य सर्वत्र सुलभत्वात् । पक्षस्य दृष्टान्तत्वं न सङ्गच्छते । तस्य दृष्टान्तत्वे सिसाधयिषां विना सिद्धेरनुमितिप्रतिबन्धकत्वेन पक्षेनुमानासंभवात् । अन्यस्य दृष्टान्तस्यासंभवाच्च सर्वेषां परार्थानुमानानामपलापप्रसङ्गः । स्वार्थानुमानं तु दृष्टान्तमन्तरेणापि संभवतीति । एतत्तु वीतानुमानमुद्दिश्योक्तमिति ।

(५) तस्मात्—सिद्धम् । उपसंहरति तस्मादिति । यतः संघातानां संघातान्तरार्थत्वेऽनवस्था तत इत्यर्थः । अस्य परस्य पुरुषस्य । अभ्युपेयं अङ्गीकार्यम् । इत्थं प्रधानादीनां परार्थत्वसिद्धौ धर्मिग्राहकमानेन पुरुषसिद्धिरिति । नन्वस्तु पुरुषस्यासंहतत्वं अत्रैगुण्यसिद्धिः कथं स्यादित्याह त्रिगुणत्वादय इति । आदिना विवेकित्वादिसंग्रहः । व्याप्ताः व्याप्याः । ननु सन्तु त्रिगुणत्वादयः संघातत्वव्याप्याः तेन किमायातमित्याह तत्संहतत्वमिति । अस्मिन् परे पुरुषे निवर्तमानं अविद्यमानं

धर्माः संघातत्वेन व्याप्ताः । तत्संहतत्वमस्मिन्परे निवर्तमानं त्रिगुणत्वादि व्यावर्तयति ब्राह्मण्यमिव निवर्तमानं कठत्वादिकम् । तस्मादाचार्येण त्रिगुणादि-विपर्ययादिति वदता असंहतः परो विवक्षितः । स च आत्मेति सिद्धम् । (५)

इतश्च पुरुषोऽस्ति । अधिष्ठानात् । त्रिगुणानामधिष्ठीयमानत्वात् । यद्य-त्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टं यथा रथादि यन्त्रादिभिः । सुखदुःखमोहात्मकं चेदं बुद्ध्यादि तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मेति । (६)

इतश्चास्ति पुरुषः । भोक्तृभावात् । भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षण-येति । भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते तेना-

---

असंहतत्वं ( कर्तृ ) त्रिगुणत्वादिकं ( कर्म ) व्यावर्तयति निवर्तयति । संहतत्वाभाव एव त्रिगुणत्वादिनिवृत्तिप्रयोजक इति । अत्र दृष्टान्तमाह ब्राह्मण्यमिवेति । कठादि-शब्दो वेदशाखाविशेषस्य संज्ञा । अत्र कठशब्दः कठाध्येतृपरः कठशाखीयपरो वा । तथा च यथा ब्राह्मणत्वं निवर्तमानं सत्कठत्वादिकं निवर्तयति तद्वत् । यथा ब्राह्म-ण्याभावात्कठाध्येतृत्वस्य कठशाखीयत्वस्य वाऽभावस्तथा पुरुषे संहतत्वाभावात्त्रैगु-ण्याभाव इति । पुरुषः अत्रिगुणत्वादिमान् असंहतत्वात् यन्नैवं तन्नैवं यथा अव्य-क्तादिकम् । उपसंहरति तस्मादिति । आचार्येण ईश्वरकृष्णेन । परः व्यक्ताव्यक्ता-दन्यः । विवक्षितः अभीष्टः । असंहतत्वादेव पुरुषः अत्रिगुणत्वादिमानिति आचा-र्यतात्पर्यम् । सः परः । इति एतत् सिद्धं निश्चितम् ।

( ६ ) इत-त्मेति । अधिष्ठानात्सान्निधिविशेषात् । अधिष्ठातृत्वं परम्परया चैत-न्यसंपादकत्वम् । त्रिगुणात्मकानां प्रधानबुद्ध्यादीनाम् । अधिष्ठीयमानत्वात् संबध्यमा-नत्वात् । प्रधानादयः पुरुषसन्निधानेन चेतनायमानाः सन्तः कर्म विदधति । यद्यदिति अनुमितिसूचकम् । प्रकृत्यादिकं परेणाधिष्ठीयमानं सुखदुःखमोहात्मकत्वात् रथादि-वत् । परेण त्रिगुणेतरेण केनचित्पुरुषेणेत्यर्थः । यन्त्रादिभिः सारथिप्रभृतिभिः । उपसंहरति तस्मादिति । त्रिगुणात्मकस्य पराधिष्ठीयमानत्वादित्यर्थः । एतदपि बुद्ध्यादिकमपि । न केवलमव्यक्तमित्यपिशब्दार्थः । त्रैगुण्यात् त्रिगुणात्मकत्वात् व्यक्ताव्यक्ताच्च इत्यर्थः । स्वार्थे ष्यञ् । अन्यः भिन्नः ।

( ७ ) इत-त्मेति । भोक्तृभावात् भोक्तृत्वात् अनुभवितृत्वात् । भोक्तृभावेन भोक्तृत्वेन उपलक्षयति बोधयति । अनुकूलप्रतिकूलवेदनीये इष्टानिष्टत्वेन ज्ञातव्ये । इष्टत्वेन वेदनीयं सुखं अनिष्टत्वेन वेदनीयं दुःखमित्यर्थः । प्रत्यात्मं प्रतिपुरुषम् । अनुभूयते ज्ञायते । तेन सुखदुःखयोः अनुकूलप्रतिकूलवेदनीयत्वेन । अनयोः सुख-दुःखयोः । अनुकूलनीयेन सुखविषयकानुरागवता । प्रतिकूलनीयेन दुःखविषयक-

नयोः अनुकूलनीयेन प्रतिकूलनीयेन च केनचिदन्येन भवितव्यम् । न च अनुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः । तेषां सुखदुःखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्मात् योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा । स चात्मेति ( ७ )

अन्ये त्वाहुः । भोग्या दृश्या बुद्ध्यादयः । न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषाम् । तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः । स चात्मेति । भोक्तृभावात् दृश्येन द्रष्टृत्वानुमानादित्यर्थः । दृश्यत्वं च बुद्ध्यादीनां सुखदुःखाद्यात्मकतया पृथिव्यादिवदित्यनुमितम् । ( ८ )

इतश्चास्ति पुरुष इत्याह । कैवल्यार्थं प्रवृत्तेश्च । शास्त्राणां महर्षीणां च दिव्यलोचनानाम् । कैवल्यं चात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां

---

द्वेषवता । अनुमानमिदं सुखदुःखं भोक्तृपूर्वकं भोक्तृभोग्यत्वात् ओदनादिवत् इति । केनचित् अनिर्वचनीयेन । अन्येन अत्रिगुणेन व्यक्ताव्यक्तभिन्नेन । ननु बुद्ध्यादीनां भोग्यत्ववत् भोक्तृत्वमपि स्यादित्यत आह न चेति । तेषां बुद्ध्यादीनाम् । स्वात्मनि स्वस्मिन् निजे । विरोधादिति । एकक्रियायाः कर्तृत्वकर्मत्वयोर्युगपदेकत्र सामानाधिकरण्याभावादित्यर्थः । यथा सुशिक्षितोऽपि नटपटुः स्वस्कन्धमारोढुं न शक्नोति तद्वत् एकस्य भोक्तृत्वभोग्यत्वे न घटेते इत्यर्थः । आत्मानं चेद्विजानीयात् इत्यत्र बुद्धिप्रतिबिम्बितपुरुषस्य कर्तृत्वं केवलस्य च कर्मत्वमिति । उपसंहरति तस्मादिति । पूर्वदोषादित्यर्थः । असुखेति । सुखादिरात्मा स्वरूपं यस्य । पश्चान्नञ्‌ समासः । सुखादिभिन्न इत्यर्थः । अनुकूलनीयः सुखविषयकेच्छावान् सुखविषयकेच्छाजनकज्ञानवान्वा । प्रतिकूलनीयः दुःखविषयकद्वेषवान् । दुःखद्वेषजनकज्ञानवान्वा । सुखाद्यात्मकभिन्नस्यैव सुखे रागो दुःखे द्वेष इति । अत्र भोगः साक्षात्कारः दर्शनं सामान्यज्ञानमिति भेदः ।

( ८ ) अन्ये– मितम् । दृश्यत्वे लक्षणामङ्गीकुर्वतां मतमाह । अन्ये त्विति । गौडपादस्वामिन इत्यर्थः । बुद्ध्यादीनां दृश्यत्वे किं फलमित्याह न चेति । द्रष्टारं विना तेषां बुद्ध्यादीनां युक्ता संभावनीया । अनुमानमिदम् । बुद्ध्यादयो दृष्टपूर्वकाः दृश्यत्वात्पृथिव्यादिवदिति । उपसंहरति तस्मादिति । द्रष्टारमन्तरा दृश्यासंभवादित्यर्थः । दृश्येन दृश्यत्वेन । हेत्वसिद्धिं वारयति दृश्यत्वेनेति । बुद्ध्यादयो दृश्याः सुखाद्यात्मकत्वात् पृथिव्यादिवदित्यनुमानम् । अन्ये त्वित्यस्वरसूचनाय । तद्बीजं तु लक्षणाभ्युपगम इति ।

( ९ ) इत–सिद्धम् । दिव्यं लोचनं दर्शनं येषां तेषामार्षज्ञानसंपन्नानाम् । परोक्षदर्शिनामित्यर्थः । आत्मप्रतिपादकशास्त्राणि आत्मदर्शिनो महर्षयश्च कैवल्यार्थं

संभवति । ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते । तदतिरिक्तस्य तु अतदात्मन आत्मनस्ततो वियोगः शक्यसंपादः । तस्मात् कैवल्यार्थं प्रवृत्तेरागमानां महर्षीणां चास्ति बुद्ध्याद्यतिरिक्त आत्मेति सिद्धम् । ( ९ )

इति सप्तदशी कारिका ।

---

मुक्तये प्रवर्तन्त इति । अत्रेदमनुमानम् आत्मप्रतिपादनपराणि शास्त्राणि न सुखादिष्वात्मत्वं प्रतिपादयन्ति कैवल्यप्रवर्तकत्वात् । यन्नैवं तन्नैवं यथा कामादिशास्त्रम् । आत्मज्ञानिनो महर्षयः न सुखादिष्वात्मज्ञानवन्तः कैवल्यप्रवृत्तिमत्त्वात् यन्नैवं तन्नैवं यथा पामरः । व्यभिचारशङ्कानिरासायाह कैवल्यं चेति । दुःखानां त्रयं दुःखत्रयं आत्यन्तिकं दुःखत्रयस्य प्रशमनं निवृत्तिः लक्षणं स्वरूपं यस्य तत् । कैवल्यं स्वरूपावस्थानं दुखादिशून्यत्वं मोक्ष इत्यर्थः । बुद्ध्यादीनां कैवल्यासंभवे हेतुमाह ते हीति । हिशब्दः यस्मादर्थे । ते बुद्ध्यादयः दुःखाद्यात्मकाः दुःखादिस्वरूपाः । बुद्ध्यादीनां दुःखाद्यात्मकत्वेन दुःखादिस्वभावात् वियोजयितुं न शक्यम् स्वभावस्य यावद्द्रव्यावस्थायित्वादिति भावः । तदतिरिक्तस्य बुद्ध्यादिभिन्नस्य । अन्तरात्मनः अतत्स्वरूपस्य सुखाद्यनात्मकस्य । हेतुगर्भविशेषणमिदम् । आत्मनः पुरुषस्य । ततः दुःखात् वियोगः विरहः विच्युतिः स्खलनमित्यर्थः । शक्यः करणीयः संपादः संपादनं घटनं यस्य सः । उपसंहरति तस्मादिति । तथाविधयुक्तिवशादित्यर्थः । सिद्धं निश्चितं मीमांसितम् ।

इति सप्तदशकारिकाव्याख्या तत्त्वसुधा ।

---

॥ श्रीशिवः शरणम् ॥

# प्रियाविरहम् ।

यस्यौपम्यं न भवति सुधादीधितिः सत्कलङ्को
मीलोन्मीलास्थितमिति कृतं पुण्डरीकेण नूनम् ।
दुग्धं दग्धं न भवति सखे माधुरी तस्य सान्द्रा
निःसादृश्यो जयति ललनाळालितोऽयं विलासः ॥ १ ॥

हासं हा संलसति सहजं यत्र लक्ष्मीः प्रकामं
यस्मिन् मौग्ध्यं प्रथममिव ते क्षिप्तमास्ते विधात्रा ।
कान्तं कान्ते वदनकमलं तत्कियद्भ्यो दिनेभ्यो
द्रक्ष्यामीति प्रतिपलमये चित्तमौत्कण्ठ्यमापत् ॥ २ ॥

सुप्तं कान्ते सहजमपि यत् पृष्ठतस्त्वां विधाय
नो सोढं तत् पुनरिह मृगाक्षि त्वयाऽयं वियोगः ।
किं मन्तव्यः सुलभ इति हा ! हंत हन्तेति नाम
भ्रान्तं शान्त्या रहितमनिशं स्वान्तमेतत् प्रयाति ॥ ३ ॥

गंभीरत्वप्रथितभयके त्वं निशीथे प्रबुद्धा
भीतिभ्रान्ता तृणलवरवं केवलं संनिशम्य ।
भूयोभूयः स्खलितललितं नाथ नाथेति नाम
कं वा कान्ते मधुरवचनं शब्दयेः स्नेहगाढम् ॥ ४ ॥

मन्दं मन्दं ननु गजगते पादविन्यासलीलां
मध्यक्षामे तरलनयने संविहायात्मनीनाम् ।
तूर्णं तूर्णं सरभसमये विस्मृतस्त्वं कदा त्वं
भूयोऽप्यालिङ्गसि जनमिमं संभ्रमेणोपसृत्य ॥ ५ ॥

अस्मिन् बाले विषमविरहस्यावधौ पाण्डुरेण
नूनं भाव्यं तव सुवपुषा नष्टतेजोमहिम्ना ।
यत्संभोगप्रमितिकुशले यौवने दैवदत्तो
मुग्धाक्षीणां दयितविरहो मर्मभित्त्वं दधाति ॥ ६ ॥

हा ! हा ! मुग्धे मयि पुनरितः संप्रयाणाय सिद्धे
जाने विद्धं तव सखि सबाधान्तरङ्गं विरङ्गम् ।
येनाक्षिभ्यां प्रसृतसलिलव्याजमालम्ब्य नूनं
मामन्वेतुं प्रयतितमितः पंकजाक्षीव मन्ये ॥ ७ ॥

प्राक्प्रस्थानाद्गदितमपि मे तद्वतं संनिशम्य
दृष्टिं दीनां मयि पतिपरे पातयित्वा कथंचित् ।
खेदोद्विग्नं करुणगदितं भूरिदत्तं निपीडं
प्रेमोद्गाढं सरभसमये सारसाक्षि स्मरामि ॥ ८ ॥

मत्प्रस्थानं समुपगतमाचिंत्य चिन्ताकुलोता
स्वप्ने दूरं गत इति वृथा संविभाव्यात्मकान्तम् ।
हा ! हा ! कान्त क नु बत भवान् गच्छतीति ब्रुवाणा
स्पष्टोन्निद्रा त्वमिति मनसः साक्ष्यमेतद्ददाति ॥ ९ ॥

पूज्या एते गुरव इति या वक्तुकामाऽऽपि मूका
सौजन्यातिप्रसरघटिता त्वं हि तेषां पुरस्तात् ।
मद्याने सा चपलनयनं साश्रमापातयन्ती
बाष्पापूर्णं त्वमिति विमले मानसं मे प्रयाति ॥ १० ॥

पुष्पोत्फुल्लाः पथि पतिपरे तत्र लोलाक्षि तास्ता
वल्लीपंक्तीर्नयनविषये संस्थिताः संविभाव्य ।
चेतः कान्ते कियदिति कियन्नेति वा तत्प्रमासीत्
तत्ते वाचस्पतिरिह बुधो वर्णयेदेक एव ॥ ११ ॥

दर्शं दर्शं गहनविपिने मार्गगामी मृगीणां
लीलालोलाः सहजचपला आवलीर्लोचनानाम् ।
कं वा कान्ते कथमुपगतो दुःखभारं प्रियस्ते
तत्त्वं बुद्धप्रियपरिचये चिन्तय स्वात्मनैव ॥ १२ ॥

नूनं दृष्ट्वा प्रणयवलितां शोभने काननान्ते
चूतोत्संगे विगडघटनां मल्लिकामेणिनेत्रे ।
यन्मे मुग्धे त्वदधिकृतमादाहनोत्कण्ठितं तत्
स्मृत्वा स्मृत्वा पुनरिह मुधा मोहमूढो भवामि ॥ १३ ॥

यद्यद्वस्तु प्रहितमथवा दैवयोगेन मार्गे
तस्मिंस्तस्मिन्नुपमितिमये संदधानो भवत्याः ।
सृष्टं दृष्ट्वा निरपरधिया वस्तुजातं प्रियेऽहं
जातोऽधीशः प्रबलतपसां ब्रह्मणीव प्रलीनः ॥ १४ ॥

दान्तस्वान्ते सदयहृदये कोमले निर्मलेऽपि
स्मारं स्मारं पुनरिह पुरावृत्तमौत्सुक्यकारि ।

बद्धो रुद्धो विहतगतिकः शंबरीविद्ययेव
मोहोद्गाढप्रसरतमसि प्राप्य तूर्ष्णीं भवामि ॥ १५ ॥

हा ! हा ! दृष्ट्वा व्यतिकरपरौ चक्रवाकौ समेतौ
चाटूक्त्या तौ सकुतुकमये दर्शयित्वा सहेलम् ।
कस्मिन्कायं प्रणयबहलं न्यस्यसि त्वं प्रकामं
कं वा कान्ते कलयसि कृतं स्वांगभारोद्वहाय ॥ १६ ॥

दूरीकृत्य प्रसभमिव यत् तत्सुवृत्तोपधानं
सान्तर्हासं महति निहिता कंधरा बाहुभागे ।
दूरं दृष्ट्वा विधिबलवशात्तं हृतं हारिहारे
क्रीडागारे शयनमधुना नूनमुत्पीडयेत्त्वाम् ॥ १७ ॥

धृत्वा कान्ते कमनगमने कान्तकान्तौ कपोलौ
कान्तस्यास्ये शशिकरभराच्छाभिरामामलास्ये ।
फुल्लाम्भोजं हसितुमधुना चञ्चरीकाश्रितं चेद्
ईहा वामे शिशिरय मनोऽप्यल्पकालं सहेथाः ॥ १८ ॥

दृष्ट्वा किं वा सखि विदधतीं सारसीं सारसेन
क्रीडामार्ये सरसि सरसं मोहितां मोहितेन ।
दूरं दृष्ट्वा स्वजनमलसं चित्तमाधाय कान्ते
त्वं मात्मानं रतिमदभरास्वादकामेऽवमंस्थाः ॥ १९ ॥

मुक्ताचूर्णं दिविजनिलयैर्लीलयेव प्रकीर्णं
दृष्ट्वा तेजः सितकरगतं बालिके चंदिरस्य ।
चित्तौत्सुक्यं गदितुमबला केवलं संनिपीडैः
स्वान्तर्भावं कथयसि कदा प्रेयसि त्वं प्रियाय ॥ २० ॥

शय्यामूलं चपलनयने कामदृष्टे विहाय
कामं रामे मृदुतरमपि प्रीतभावं प्रपद्य ।
कस्यैकान्ते ननु सललितं देहमालिङ्ग्य कान्ते
वक्षःप्रांते कलयसि वपुः सालसानीलचक्षुः ॥ २१ ॥

भूयः कान्ते विपरिहसिता स्वामिना जल्पता ते
प्रेमोन्मीलद्वचनमसितो दृष्टिपातं कदा त्वम् ।

३

दूरासीना प्रणयकुपिता चञ्चलाम्भोजलीलां
हेलालोले नयसि विपुलं लोचनं सांजनं ते ॥ २२ ॥

तस्मिन्भूयो नभसि रभसा विद्युदुन्मेषमात्रैः
साकं मेघैर्विरहिहृदयान्याविलीकर्तुमत्र ।
संनद्धे वा पुनरपि मनः कान्तसंश्लेषहेतो-
रुत्कंठेत प्रसभमिव ते बालिके भिन्नपूर्वम् ॥ २३ ॥

विद्युल्लीलाप्रहरणमये साधयित्वा कथंचिद्
धारासारैः शिखिवरभृतां मूर्ध्नि पादं प्रदाय ।
धीरोन्नादैः सहजमिव यः कंबुलीलां तनोति
सोऽयं मन्ये जलदहतको योद्धुकामो वियुक्तैः ॥ २४ ॥

तत्रापि त्वं कथमपि मनः स्थापयित्वा सुबोधे
मा गाः शोकं विमलचरिते क्रान्तचित्तं कदाऽऽपि ।
धीराचाराः सुदति विषमे दुर्गमेऽपि प्रपन्ने
चित्तोत्सादं सहजधृतयो नानुमन्यन्त एव ॥ २५ ॥

यो वा लब्धो विषमनिकषग्रावसंघातशुद्धो
मोदः कान्ते तपति तपने तापहारीव वृक्षः ।
सौरूप्योत्कर्षः सखि समुचितस्तत्र नामेति नूनं
दैवप्राप्तं प्रणयचयनं विप्रयोगं भजस्व ॥ २६ ॥

अंगेनाङ्गं घटयितुमयेऽशक्यमेवेति कृत्वा
ज्ञात्वा बाले वसतिमपि ते दक्षिणे दिग्विभागे ।
भ्रान्तं भ्रान्तं पवनमनिशं दाक्षिणात्यं वहन्तं
त्वद्गात्राणामुपहृतमदस्वादमास्वाद्य मोदे ॥ २७ ॥

॥ इति श्रीमार्तण्डकविविरचितं प्रियाविरहम् ॥

---

# प्राप्तपत्राणि ।

श्रेष्ठतमाश्चन्द्रिकानिष्पादकाः !

आगामिन्यां संख्यायामेतत्प्रकटीक्रियतां संमुद्य । यथा तैत्तिरीयारण्यके शिक्षाख्ये प्रपाठके ओमिति ब्रह्मेत्यनुवाकः सप्तमः । तत्राद्यवाक्य उपासनाविधायके संशयः किमोङ्कारे प्रतीके ब्रह्मदृष्टिरुत ब्रह्मैवोपास्यमोङ्कारश्च वाचकत्वेन विशेषणमिति । एवमियं प्रतीकोपासना वाऽहंग्रहोपासना वेति । संशये कारणं च भगवद्भाष्यकारैः सुरेश्वराचार्यैश्च भाष्ये वार्तिके च प्रथमपक्षस्य ग्रहणं विद्यारण्यैश्च दीपिकायां प्रथमपक्षं निरस्य द्वितीयपक्षस्य साधनमिति । श्रीमद्भाष्यकारीयः सिद्धान्त एव ग्राह्यो न द्वितीय इति मन्मतम् । तत्कथमिति त्वग्रिमायां संख्यायां प्रकटीकरिष्यामः । भवन्मतं त्वस्यामेतदुत्तरस्यां वा संख्यायां प्रकटीक्रियतामिति शिवम् ।

**मराठे श्रीनारायणशर्मा**
**गंगापुरी, वाई.**

२

श्रीमतां महाशयानां संस्कृतचन्द्रिकासंपादकानां

श्रीअप्पाशर्मविद्यावाचस्पतीनां पादपद्मेषु सप्रणामा विज्ञप्तिः । प्रश्नत्रयस्यास्य यथाशास्त्रं भवद्भिश्चन्द्रिकाया आगामिन्यां संख्यायामनन्तरसंख्यायां वा निर्णयः सामग्र्येण कर्तव्यः ।

१ शास्त्रीयोऽशास्त्रीयश्च दत्तकस्वीकारः कथंभूतः ।

२ कियतिचित्कालेऽतीते चेदशास्त्रीय इति ज्ञायेत तदा प्रायश्चित्ताचरणे दत्तकस्य मातापितृश्राद्धाधिकारसंपत्तिर्भवेन्न वा ।

३. पुत्रग्रहणमयथाविधि कृतमिति यदा विज्ञायते ततःप्रभृति वर्षषट्कपर्यन्तं तद्राहित्ये कालोऽस्ति । हिन्दुलानाम्नि राजकीयन्यायशास्त्रे कश्चन नियमोऽस्ति किल । नियमोऽयं धर्मशास्त्रमनुसरति न वा । इति ।

**पायसालनारायणः ।**
**येरुर.**

३

श्रीचिदानन्दसरस्वतीयतीन्द्राय नमः ।

चन्द्रिकापाठकमहाशयेषु येन केनापि वा विदुषां प्रवरेण कृपया प्रदीयतां निम्नानिर्दिष्टप्रश्नानामुत्तरमित्यभ्यर्थये साञ्जलिबन्धम् ।

यत्स्वाध्यायमथो योतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः संतिष्ठते एवं श्रुत्या प्रतिपादितोयं खलु स्वाध्यायब्रह्मयज्ञ इति विदितमेवैतत्सर्वेषां ब्राह्मणानाम् । किन्तु अकरणप्रत्यवायप्रतिपादितवैश्वदेवाङ्गभूतानां पञ्चानां यज्ञानां मध्ये मनुष्ययज्ञानन्तरं कर्तव्यो ब्रह्मयज्ञः स्वाध्यायब्रह्मयज्ञादन्यः कश्चिदस्तीति व्यासादीनां स्मृतिषु प्रतिपादितम् । आचारोपि द्विविधः पण्डितानामत्रत्यानाम् । तत्तत्रभवतां श्रीमतामाचारश्चाशयश्च प्रमाणोपन्यासपुरःसरमुत्तरपत्रे प्रकाश्यतामिति शुभम् ।

**कश्चन धर्मजिज्ञासुः**

पुला.

---

## सप्रमोदमङ्गीकारः ॥

श्रीललितासहस्रनाम राष्ट्रमुखस्य प्रथमा संख्या धर्ममार्तण्डपञ्चाङ्गं बालमनोरमायाः प्रथमसंख्या च सानन्दं च सादरोन्मेषं च स्वीक्रियतेस्माभिः । अवश्यं चात्रात्मनोऽभिप्रायमचिरादेवाविष्करिष्यामः ।

---

## समालोचना ।

**पार्वतीपरिणयम्**— नाटकमेतत । नयनसरणिमारूढमेव खल्वेतद्विषयान्तरेभ्यः समाकृष्य हृदयमनुरञ्जयत्यात्मनः सौष्ठवातिशयेन । समवेक्षमाणाः खल्वस्य मुद्रणमाधुरीं यत्सत्यं मुद्रणसौष्ठवसमासादितसुनिर्मलयशोराशिमपि निर्णयसागरं क्षणं निकृष्टमेव वाणीविलासाद्दाकलयाम । अतिमात्रं हि हृदयापहारिणी संमुद्रणव्यवस्थातत्या । यादृशी चेयं तादृश्यान्येव पत्राणि । यथाविधानि च पत्राणि तथाविधान्येवाक्षराणि । सर्वथा न खल्वत्र तथाविधं किमपि यन्नाम नावर्जयेदन्तरङ्गं यच्च न विलोभयेच्चक्षुरालोकमानस्य । एवंविधमेव हि बाह्याङ्गमेतस्येति ।

अन्तरङ्गं पुनरवश्यमतिशेते बाह्याङ्गमप्यात्मनो मधुरिमातिशयेन। तथा हि। प्रबन्धस्तावदयं निखिलसुरासुरमुनिमनुजवृन्दवन्दितचरणारविन्दद्वन्दस्य भगवतस्त्रिलोकीगुरोर्मुग्धेन्दुचूडामणेः परमपावनेन चरितविशेषेण पवित्रितः सुरभीकृतश्च श्रीमता वामनभट्टबाणेन संग्रथितः । सम्प्रति चास्मत्सविधमुपस्थितोयं श्रीमद्भिरभिनवभट्टबाणाद्युपाधिपरिमण्डितैर्नानाविधशास्त्राकूपारसमालोडनपटिष्ठप्रज्ञैरव्याजवल्लभैः सरस्वतीदेव्याः श्रीमत्कृष्णमाचार्यैः प्रणीतया तत्तन्मर्मविबोधनप्रवीणया टिप्पन्या च कविकालनिर्णयादिगर्भितया भूमिकया च समुल्लसितः । एवं च महानटो भगवानुमारमणो नायकः श्रीपार्वतीपरिणयः प्रतिपाद्यः श्रीमान्वामनभट्टबाणो विरचयिता अभिनवभट्टबाणो व्याख्याता च संस्कर्ता च श्रीमांश्च संस्कृतोन्नमनबद्धश्रद्धः सुदृढसमुत्साहो वाणीविलासयन्त्रालयाध्यक्षो मुद्रयितेति नूनमेकैकमप्यत्र प्रशंसास्पदं किं पुनः समवायः। अभिनन्दामः किल वयं श्रीमतो वाणीविलासाध्यक्षमहाशयस्येव निखिलविद्वत्कुलललामायमानानां श्रीकृष्णमाचार्याणामपि व्यवसायमिमम् ।

प्रबन्धाश्चायं श्रीवाणीविलाससंस्कृतग्रन्थमालायाः प्रथमं कुसुममित्यवगच्छन्त एतद्द्वारा च संस्कृतभाषासंग्रथितानां तेषां तेषां प्रबन्धरत्नानां सुसंस्कृततया हृदयङ्गमतया च प्रकाशनं संभावयन्तः परं प्रमोदमधिगच्छामः । प्रार्थयामहे चास्याः प्रचाराधिक्यायेव दीर्घायुष्ट्वाय च भगवन्तमुमारमणम् ।

एतच्च नाटकमधिगन्तुमिच्छद्भिः पत्रादिकं 'म्यानेजर श्रीवाणीविलास प्रेस् श्रीरंगम्' इत्यत्र प्रेर्यम् ।

---

## संवादसंग्रहः ।

### संपादकीयाभिप्रायश्च ।

# NEWS AND NOTES.

भारतवर्षीयेषु चिरस्मरणीयास्तास्ताः सुदुस्तरा विपदः समापातयति समयेऽस्मिन्कष्टं किल जीवन्ति हताशा भारतवर्षीयाः। द्वेधा किलैता विपदः। सहजाश्चोत्पाद्याश्चेति । तत्र तावत्सहजा दुर्भिक्षग्रन्थिज्वरादयः । उत्पाद्यास्तु प्राजानां प्रातिकूल्यमाशङ्कमानैर्भूपादिभिः सकारणमकारणं वोद्भाविता दण्डादयः। तत्र तावदाद्यानां सर्वत्र सुप्रचारत्वमेवेदानीमिति नैतत्परोक्षं कस्यापि। द्वैतीयीकास्तु

यदा यदा कवलयत्यन्तरङ्गं राजपुरुषाणां संशयपिशाचिका तदा तदा प्रादुर्भूय कमपि महात्मानमिहैवानुभावयन्ति निरयनियन्त्रणाम्। यैश्चाद्य यावदनुभूतेयं नियन्त्रणा तेष्वेव स्वदेशप्रणयी श्रीमान्भोपटकरमहाशयोप्यन्यतमः।

सोऽयं महाभागः पुण्यपत्तननिवासी संपादकश्च भालाख्यस्य संवादपत्रस्य। एतेन च संपाद्यमानेऽस्मिन्संवादपत्रे निरये राजसभाधिवेशनं ( नरकांतलि दरबार ) इतिशीर्षकः कोऽपि लेखोऽतीतेऽब्दे प्राकाशि। लेखस्य चास्य राजविद्रोहजनकतां संभावयन्त्या मोहमयीविभागीयया नृपशक्त्या षाण्मासिकमपरिश्रमकारावासं दण्डितोऽयं दे. भ. भोपटकरमहाभागः। निर्दोषमेव च त्मानमवबुध्यमानेन शिरसिकृत्य राजाज्ञामनुभावि सोऽयं कारावासो नन्दननिवास इव श्रीमता भोपटकरमहाभागेन। मासे चास्मिन् जन्माष्टम्यां परिसमाप्तः सोऽयं कारानिवासावधिरेतस्य। अतश्च तस्मिन्नेव दिने मोचितोऽयं ठाणाकारालयाद्राज्ञा।

द्वेधा तावदत्रापराधो भवति राजसंमतः प्रजासंमतश्चेति। यं हि राजाऽपराधमेव संमन्यते नासौ प्रजामते व्रजत्येवापराधत्वम्। अतश्च नैतच्चित्रं यदि कर्म किमप्यपराधत्वेन निश्चित्य परुषतरमपि दण्डितो राज्ञा कोऽपि महाभागो दुर्दैववशादनुभवन्ननुभूतवानपि वा दुःसहतरं कारागृहनिवासादिकं दुःखं नांशतोऽपि विन्देत प्रजास्वनादरभावम्। यश्च प्रजयापराधित्वेन संमतो न सत्वसौ सत्कृतोऽपि राज्ञा प्रजासु बहुमानमासादयति। अत एव चापराधिन इति दण्डिता अपि राज्ञा महात्मानः सुरेन्द्रनाथवन्द्योपाध्यायतिलकमहाशयादयो न किल नाद्रियन्ते प्रजाभिः। प्रत्युत समधिगतवेधा इव महामणयः समाधिकमेव प्रणयास्पदीक्रियन्त एत एताभिः। संभाव्यमाना अपि च राज्ञा नांशतोऽपि विन्दन्ति प्रजादरं करधनप्रभृतयस्तृणीकृतभारतवर्षीयाः पाश्चात्यमहाभागाः।

तदेतदपि नाश्चर्यं यत्कारागृहोन्मुक्तं प्रजामते निरपराधमेवैनं भोपटकरमहाभागं संभावयितुं मोहमयीतश्च पुण्यपत्तनतश्चान्येभ्यश्च तेभ्यस्तेभ्यो नगरेभ्यः समुपस्थिताष्ठाणानगरकारागृहद्वारं परःसहस्रा महाभागाः। आसीच्चेदानीं महोत्सवमयी कापि महायात्रा। संभाविनश्च प्रजासु महत्तरैः समाहूय महीयसीं सभां तत्रैव दिने भोपटकरमहाशयष्ठाणानगरे। अवसरे चास्मिन्यः कृत उपन्यासो भोपटकरमहाभागेन स किल स्वदेशप्रणयेन च विनयमहिम्ना च निसर्गमधुरतया चालौकिकधैर्यविद्योतकतया चावश्यमपाकर्षेदन्तरङ्गं सर्वेषाम्। अपाकर्षच्च ठाणानगरोपस्थितानामशेषाणामपि महाभागानाम्।

अपरेद्युश्च प्रभाते महात्माऽयं पुण्यपत्तनमनुप्राप्तः। तदानीं च सभाजयितुमेनं परःसहस्राः पुण्यपत्तनवासिनः सह श्रीमता तिलकमहाशयेन श्रीमता च कालपत्रसंपादकेन पराञ्जपेमहोदयेन चान्यैश्च तैस्तैर्महत्तरैर्बाष्पयानीयायां पार्श्ववेदिकायां संनिहिताः। तैरपि सगद्गदं च

अग्रिममूल्येनैव संस्कृतचन्द्रिका प्रदेया ।
तच्च वार्षिकं १ रू० ८ आनकाः । छात्रैस्तु १ रू० ३ आ० देयम् ।

त्रयोदशखण्डस्य ] १८२८ शाकपौषमासस्य [ दशमसंख्या ।

श्रीशिवः शरणम् ।

# संस्कृतचन्द्रिका

नाम

संस्कृतमासिकपत्रिका ।

---

प्रबन्धपीयूषरसप्रवर्षिणी निषेव्यतां संस्कृतचन्द्रिका बुधैः ।
जगत्समग्रं सितयन्त्यपीष्यते चकोरकैरेव हि चन्द्रिरप्रभा ॥

---

श्रीजयचन्द्रशर्मसिद्धान्तभूषणभट्टाचार्येण
राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पतिना च
संपाद्य
वाईक्षेत्रे मोदवृत्तयन्त्रालये च संमुद्य
संस्कृतचन्द्रिकायाः कार्यालयात्
प्रकाशिता ।



---

आदर्शमूल्यम् ४½ आनकाः ।

# विषयानुक्रमणिका ।



---

## विज्ञापनम् ।

संपादिता किलास्माभिर्महीयसा प्रयासेन श्रीमता भृगुसंहिता । यस्याः खलु साहाय्येन भूतं भवद्भावि च वृत्तमशेषत एवावगम्यते मनुजस्य । अनेकश किलैतदनुभूतमस्माभिर्यदस्या अनुसारेण विहितायां जन्मपत्र्यां नांशतोऽपि फलानि व्यभिचरन्तीति । निर्मीयते च जन्मपत्रिकैवंविधाऽस्माभिः । यथेयमे वमन्यविधा केशव्यादनुसारिण्यपि विधीयते । एतत्कृते च पुरस्कारद्रव्यम् तिमात्रमेव स्तोकं प्रदेयं भवति । तच्च प्रेर्य पत्रमवबोद्धव्यम् ।


तोरोश्रीबालशास्त्री
होरालङ्कारः प्रश्नचूडामणिश्च
वरुणतीर्थवीथी, कोल्हापुरम् ।


---

॥ श्रीः ॥

# भक्तिः ।

( पूर्वतोऽनुवृत्ता )

नास्या बहिः प्रकटनीयं चिह्नं किञ्चित् । कुर्वन्ति परप्रतारकान् वषान् बहुविधान् दाम्भिकाः । न हि भवति किञ्चिदपि प्रयोजनं तेन । भक्तिरन्तरङ्गभवा हि निःश्रेयससाधनासाधारणहेतुभूता । तादृश्या एव भवेद्वश्यः परमेश्वरः । एतदभिप्रेत्यैवोक्तं नीलकण्ठदीक्षितैरपि । यथा—

**अर्चामीति धिया यदेव कुसुमं क्षिप्त्वा जनो मुच्यते विध्यामीति धिया तदेव विकिरन् भस्मीकृतो मन्मथः । इत्याभ्यन्तरभक्तिमात्रसुलभो बाह्यानपेक्षश्च यस्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते । इति ।**

अतो निःश्रेयससाधनीभूता भक्तिरान्तराङ्गिक्यैवेति सिद्धम् । सैतादृशी भक्तिर्द्विविधा । मार्कटी मार्जारिकी चेति । यथा वा गच्छन्तीमेव मातरं मर्कटशिशुः परिरभ्य दृढं न जहाति । तथा सर्वदा अविश्लेषमविच्छित्ति ध्यायीत परमम् । सा हि भवति मार्कटी । अथैतस्यामतिसाधकात्सिध्यति स्वतो मार्जारिकी परमेशे । सा तु यथा निश्चिन्तं स्वपन्तं शिशुं मार्जारी बह्वन्तरायात्संरक्ष्य भूयोभूयस्स्थानान्तरं प्रापय्य संरक्षति तथा परिचयलब्धदिव्यमार्कटिकभक्तियुतान् बालानिव स्वान् चन्द्रशेखरः कृपया संरक्षति संसारसागरात् । नैव प्रच्यवन्ते ते परमभक्ताः कदाचिदपि दिव्यस्थानात् । एतदभिप्रेत्यावोचन् भगवत्पादा अपि । यथा—

**अङ्कोलं निजबीजसन्ततिरयस्कान्तोपलं सूचिका साध्वी नैजधवं लता क्षितिरुहं सिन्धुस्सरिद्वल्लभम् । प्राप्नोतीह यथा तथा पशुपतेः पादारविन्दद्वयं चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते । इति ।**

एतच्च मार्कटीमेवानुसरति । तथा च यद्यचञ्चला निधीयते भक्तिः परस्मिन् तदैव सिध्येन्नित्यं शाश्वतं पदमिति । अत्र ह्याचार्यपादाः एकोदाहरणेनैव निर्वर्तनीये पञ्चोदाहरणान्युक्तवन्तः । तदत्र महान्तः कल्पयन्ति बहवो बहु-

३

विधं तात्पर्यम्। नैव जानाम्यहमज्ञस्सर्वं विवेक्तुम्। तथापि पश्यामि यथामति किञ्चित्। प्रथमतोऽत्रोक्तम्। यथा वा अङ्कोलाख्यं वृक्षविशेषं स्वस्यैव बीजं निपतितं सत् परप्रेरणानपेक्षं पुनश्च स्वयमेव सज्जते मूलं तद्वदेव परानपेक्षं यदि समाप्नोति मनः परमेशं तर्हि सोच्यते भक्तिरिति॥ तादृक्ष एव भक्तो न निवर्तते परमेश्वरादित्युक्तं भवति॥ अत्र यथा वा बीजं निपतितमप्यधः पुनश्च मूलमेव भजते वृक्षस्य यथा वा पुनश्च न निवर्तते तद्वदिति युक्तम्। इदानीमस्माकमेकोदाहरणेनैव सिद्धेऽभीष्ट किमर्थं शेषाणीति चेत् अत्रेदमसमाधानबीजं पूर्वोदाहरणे। किमिति चेत्। यदा वा अङ्कोलभ्रष्टं हि बीजं निपतेत्तद्वृक्षच्छायान्तःप्रदेश एव सज्जते तदैव मूलम्। चेत् बहिः वृक्षच्छायातः तर्हि न समायाति मूलम्॥ किं च सक्तस्यापि तस्य भवेद्येन केनापि विश्लेषः। किं च सक्तमपि सत् स्वरूपतयैव वर्तेत न पुनर्भजेत वृक्षरूपं किञ्चिदपि। तद्वत्किमेतादृशभक्तिभावसंतुष्टादपि वशगात् परमेश्वराद्भवेत्कदाचिद्भ्रंशोऽपि येन केन वा॥ किं च किं भवेत्सोऽपि सिद्धपरमेशपरमकरुणावान् कर्मबद्धत्वसंसारित्वादिस्वरूपत एवं कष्टभाक् इति भवत्यनेकसंशयग्रस्तम्। अत एतादृशाशङ्का जटिलमसारं मत्वा परमाहुः। अयस्कान्तोपलं सूचिकेति। अत्र सूचिकाशब्दस्य न सूचिकैवार्थः॥ किन्त्वयसोऽपि वाच्यमेव॥ तथा च यथा वा अयस्कान्तोपलमयः प्राप्तं सत् विना परप्रेरणं समीपस्थितं तद्रूपभाक्च भवति तथैव भवति परमेश्वरे तादृशभक्तिमानिति॥ अथात्रापि यदि समीपे वर्ततेऽयः तदैव लभतेऽयस्कान्तम्। तत्तु यदि येन केनापि पिहितं तदा नैव लभते तद्वत्सिद्धमाहात्म्यवानपि कदाचित्सन्निधिमागतं भजते। विश्लिष्टश्चेद्विश्लिष्ट एवेत्याशङ्कामाशङ्क्य तदपि निरस्याहुः। साध्वी नैजधवमिति॥ यथा वा साध्वी समीपस्थितमुत प्रवासिनमाहोस्विन्मृतं वा स्वभर्तारं अविमुच्यैव कायेन मनसा आत्मनापि विश्लेषरहितं स्थित्वा बहुजन्मसंभवेपि भर्तुः तत्तच्छरीरानुगुणं लब्ध्वा सायुज्यमेवाप्नोत्यन्ते बहुकालान्तरं वा तद्वदेव सिद्धभक्तिमानपि येनकेनापि न विमुच्यते कारणान्तरैरिति। अत्रापि। प्रायशो न विमुच्यन्ते यद्यपि साध्व्यो निजभर्तृसकाशात् विश्लेषं प्रापुरेवाहल्याद्रौपदीसीतातारामन्दोदर्यादयोपि किञ्चिद्दुःखं विश्लेषजम्। तद्वद्भवेदेव सिद्धभक्तिमतोपि किञ्चिद्दुःखं यथाकथञ्चिदित्युक्तं भवति॥ किं च सर्वदापि स्यात स्त्रीणामिव स्वातन्त्र्याभावः द्वैतभावनयेत्यादि

बहुविधशङ्कामालोच्य पुनरप्यवोचन् । लता क्षितिरुहमिति । यथा वा क्षितिरुहं गता लता सर्वमाक्रम्य वृक्षं संछाद्य तं स्वीयपर्णफलपुष्पाद्यैरुद्गता तस्यैव तरोः शैत्येन प्राप्य वृद्धिं पश्यतामपि वृक्षो वा लता वेति शङ्कां दिशन्ती परमोल्लासेन वृक्षस्याप्युपरि शोभतेतरां तद्वदेव सिद्धपरमभक्तिमानपि समासाद्य परमेश्वरं तदनुमोदितः भक्तवशगात्परमेश्वरात् स्वेच्छया लब्धदिव्यरूप एव प्रकाशतेऽयं साक्षात्परमेश्वर एवेत्यद्वैतभावनयेति । अत्रापि संजाता शङ्का । सर्वं भवदुक्तं संगतमेव स्यात् यदि मूलभागे लताया विच्छेदेऽपि न स्वरूपहानिस्स्यात् भवति हि स्वरूपनाश एवाचिरान्न पुनरुन्मेषः तद्वदेव किं भवेद्भक्तस्यापि सिद्धमहिमवतः विच्छित्तिः पुनः प्रापणयोग्या इति मत्वा परमनिष्कृष्टार्थं स्वमतसारभूतमाहुः सिन्धुस्सरिद्वल्लभमिति ।। यथा नदी समुद्रं गच्छति । गत्वा च स्वरूपविहीना तदैक्यं प्राप्नोति ऐक्यापन्ना च न पुनर्येन केनापि कारणेनालं भवति विवेक्तुम् ।। तद्वत्परमभक्तोऽपि परमेश्वरमेव लब्ध्वा तद्रूपं प्राप्य चाविश्लेषस्वभावो भवति । यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।। इति न स पुनरावर्तते न स पुनरावर्तते इत्यादिश्रुतिशतानुसारतः । अन्ये त्वस्यैव पूर्वपूर्वास्वारस्यकल्पने गौरवं आचार्यपादानां अविमृश्यकारिताभवनं च मत्वा क्रमेणाङ्कोलाद्युदाहरणपञ्चकस्यापि द्वैतविशिष्टाद्वैतवाल्लभाद्वैतादिमतोदाहरणपरतां कल्पयन्ति । सर्वथापि न कदाचिदपि भक्तस्य भवेच्च्युतिरित्यत्रैकमत्यमावहन्ति सर्वमतस्था इत्यत्र नास्ति शङ्का । अतश्चानेनापि सिद्धं भवेदविच्छिन्नान्तरङ्गिकभक्तिमान् जन इति । अथात्र किञ्चिदिवाशङ्क्येत—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ।। अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः । अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ।। आकाशवत्सर्वगतश्च नित्यः इत्यादिश्रुतिशतसमुद्घुष्टस्य निर्लेपस्याजरस्य आकाशवत्सर्वगतस्य नीरूपस्य परब्रह्मणः कथं स्याद्भक्तिकर्म । न कर्मणा न प्रजया धनेनेत्युक्त्वा त्यागेनैके अमृतत्वमानशुरिति खलूद्घुष्यन्ति श्रुतयः । किं च तद्यथेह कर्मचितो

लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्यादिश्रुतिभिः भक्तिरूपकर्मणा संपाद्यमानस्यानित्यता कण्ठोक्ता भवति । अपि च नेह नानास्ति किञ्चनेतीयं श्रुतिः ब्रह्मणो व्यतिरिक्तमर्थं वारयति । सर्वं खल्विदं ब्रह्मेत्यनेन च ॥ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति च गर्हते हीश्वरव्यतिरिक्तजीवास्तित्ववादिनम् । अतो न संघटते भक्तिर्मोक्षसाधनमिति ॥ सतीत्थं कथमुक्तमत्र भवता मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसीत्येवकारमुद्घुष्यापीति । बाढम् । स्यादेतद्भवदुक्तं सर्वं समञ्जसमेव । यदि सिध्येदात्मैक्यज्ञानं सर्वेषामाबालवृद्धमविशेषं साधनान्तरानपेक्षम् । न सिध्यति खलु तथा । अथातो ब्रह्मजिज्ञासेत्युपक्रममाणेन भगवता व्यासेनापि खलु बहुविधशतकोटिजन्मकृतसुकृतसार्थसंपादितशमदमादिसाधनचतुष्टयसंपन्नस्य व्यधायि ब्रह्मजिज्ञासा न ह्यविशेषं सर्वेषामपि ॥ न ह्यवोचन् भाष्यकारा अपि अथशब्देन वेदाध्ययनसंपत्त्यनन्तरं इत्यथातो धर्मजिज्ञासेतिवत् अर्थमुक्तवन्तः धर्मजिज्ञासानन्तरमिति वा ॥ अपि तु साधनचतुष्टयसंपत्त्यनन्तरमित्येवमेव ॥ एतदभिप्रेत्यैव पुनरप्यवोचन् स्पष्टतस्तत्सूत्रे । नन्विह कर्मावबोधानन्तर्यं विशेषः न । धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः इत्यनेन धर्मजिज्ञासानन्तरमपि न संभवति भाग्यहीनस्य ब्रह्मजिज्ञासेत्येतदप्युक्तं भवति ॥ अत एवोक्तं नीलकण्ठदीक्षितैरपि—

अनधिगते कामसुखे कालेन यथा प्रवर्तते तरुणः ।
एवं ब्रह्मसुखेपि प्रवर्तते कोऽपि भाग्यवशात् ॥ इति ।

अतो नैव सिध्यति तादृशज्ञानं आत्मैक्यसंभूतं येन भवदुक्तं संगच्छेत ॥ अपि तु तादृशज्ञानसाधनीभूतया भक्त्यैव लब्धव्यो मोक्षः इत्यभिप्रायेणोक्तं "भक्तिरेव गरीयसी" ति वाक्यं कथं न संगच्छते ॥ एतदेवाभिप्रेतं भवति भगवता व्यासेनाप्यथातो ब्रह्मजिज्ञासेत्युपक्रममाणेन ॥ तथा भाष्यकारैरप्यथशब्दस्य साधनचतुष्टयसंपत्त्यनन्तरमिति विवृण्वानैः । तथा हि । विमृशन्तु साधनचतुष्टयसंपत्त्यनन्तरमित्यत्र कथं सिध्येत्साधनचतुष्टयसंपदिति ॥ पुण्यवशादिति वक्तव्यम् । कथं लभ्येत पुण्यम् । कर्मणैवेत्यङ्गीकार्यम् ।

( क्रमशः )

## सानन्दमङ्गीकारः ।

जयपुरराज्यान्तःपातिशीकरनगरवास्तव्येन पण्डितप्रवरेण श्रीमता बालचन्द्रशास्त्रिणा प्रणीतं तर्कसंग्रहखण्डनं चम्पारण्यमण्डलान्तर्गतशिकारपुरग्रामवासिना श्रीयुतबाबुजगन्नाथप्रसादवर्मणा विरचिता श्रीमज्जानकीवरवियोगभावनिदर्शिका चेति पुस्तकद्वयं सानन्दं सादरोन्मेषं च स्वीक्रियतेऽस्माभिः । अचिरादेव चैतत्समालोच्येत ।

---

## संवादसंग्रहः

### संपादकीयाभिप्रायश्च ।

## NEWS AND NOTES.

विदितप्राय एव प्रायेण श्रीमान् राममिश्रशास्त्री नाम वाराणसेयः पण्डितप्रकाण्डो भारतीयानामशेषाणाम् । सोऽयं महात्मा वैशाखवदि षष्ठ्यां विनिमज्य व्यसनमहाम्बुधौ पण्डितसमाजं पर्यत्यजन्निःसारमिमं भूलोकमिति यत्सत्यं विषीदामः । न जाने किमिति वा निष्करुणत्वमेतदकारणमाविष्क्रियते भारतवर्षे विधात्रेति यद्नेन प्रत्यहमेव करालकालवदनकुहरे समर्प्यन्ते तानि तानि भारतवर्षीयाणि पण्डितरत्नानि । यद्यपि भूयःस्वेव विषयेषु नास्त्यंशतोऽपि न ऐकमत्यं पं० राममिश्रशास्त्रिमहाभागेन तथापि तस्य परमवैदुष्ये नास्ति नः स्तोकोऽपि सन्देहः । अत एव च तत्प्रणीतान् उद्वाहसमयमीमांसाव्रात्यसंस्कारमीमांसातुरीयमीमांसाप्रभृतीन्प्रबन्धान्सनातनभारतधर्मविरुद्धत्वादप्रामाण्यपक्षे निक्षिपन्तोऽपि शिरसि कुर्मोऽस्य प्रशस्यतमं पाण्डित्यम् । शोचामश्चास्य निधनेन भगवत्याः स्तोकतमोच्छ्वसितमात्रावशिष्टजीविताया गैर्वाण्या वाण्या दुर्भागधेयविलसितानि । योजयतात्समुचितेन पदेन पं. श्रीराममिश्रशास्त्रिमहाभागं तदभीष्टा देवतेति संप्रार्थ्यतेऽस्माभिः ।

---

इदमप्यपरं तपस्विन्या दुर्भाग्यविलसितं निवेदयन्तो विषीदामः संस्कृतभाषायाः । यन्मोहमयीविभागीयः प्रथिततमो महीयान्पण्डितो महामहोपाध्यायो झळकीकरोपाह्वः श्रीमान् भीमाचार्यमहोदयः परित्यज्येममसारप्रायं भूलोकं श्रीमद्रमारमणसालोक्यं प्रापादिति । गरीयान्किल नैयायि-

कोऽयं महाभागः । यौवने समधिगतराजकीयसंस्कृताध्यापकपदोऽयं लब्धविरामः स्वीये झळकीग्रामे प्रतिवसतिस्म । अनेनैव प्रणीतो न्यायकोशो नाम न्यायशास्त्रीयशब्दार्थसंग्रहः । संमुद्रितं चास्य द्वितीयं संस्करणम् । न्यायसिद्धान्तमुक्तावली च महाराष्ट्रभाषया तथा विवृत्ता यथाऽस्याः सम्यगवबोद्धुं शक्यते मर्मार्थः प्रज्ञावता । हेमन्तव्याख्यानमालायां च षड्दर्शनीमधिकृत्य प्रदत्तमनेन व्याख्यानमाकर्षत्यन्तरङ्गं सहृदयानाम् । एवंविधानां च महात्मनां भूलोकपरित्यागो नामायमसामान्यामेव हानिं जनयेत्संस्कृतभाषाया इति नात्र संशयलेशोपि । सर्वथा बलीयसी भगवती भवितव्यता । योजयतु भगवान् समुचितेन पदेनामुं महाभागमिति प्रार्थयमाना विषयान्तरे तावल्लेखनीं व्यापारयितुमिच्छामः ।

---

प्रियपाठकमहोदयाः ! यादृशी किलानुभूयते वत्सरेऽस्मिन्विपत्सलिलाभावनिबन्धना कोल्हापुरीयैर्न खल्वेवंविधेयमनुभूतपूर्वा कदाचिदपि । अश्रावि किल बाल्येऽस्माभिर्जरत्तराणां वदनेभ्यो यदत्र महोदधिखण्डायमाने श्रीमति रङ्कालये नाम महासरसि मूलतः किमपि सुरमन्दिरं विद्यत इति । अद्ययावच्च केनाप्यदृष्टपूर्वमिदं सम्प्रत्यामूलान्तमवलोक्यते सर्वैः । सलिलं चात्र सरसि शतांशमात्रमप्यवशिष्टं स्यान्न वेति संदिह्यते नश्चेतः । महत्तमस्य चेदियं दशा सरस एतस्य तदा का कथाऽपरेषाम् । तानि किल प्रागेव शुष्काणि । आसन्किल पुरा कोल्हापुरे पदे पदे तीर्थानि यानि किल सति प्रसङ्गे सलिलप्रदानेन जीवयन्तिस्म पौरजनान् । दुर्दैववशात्तेष्वपि भूयांस्येवेदानीं निर्मूलितानि राजकीयैरधिकारिभिः । यानि च द्वित्राण्यवशिष्टानि तान्यपीदानीं शुष्काणि । एवंभूते च व्यतिकरे यत्र खल्वासन्नषष्टिसहस्रमिता जना निवसन्ति तत्रास्मिन्कोल्हापुरे जलं जलमिति प्रधावतां महीयसि च संग्रामे विजयमिव जलकलशमेकमासादयतामनभ्यस्तपूर्वजलाहरणकर्मणां शिरीषकुसुमपेलवानां खिद्यमानानां नारीजनानां नयनमात्र एव प्रचुरतरं संदृश्यते सलिलम् । श्रीमत्याश्च महालक्ष्म्या मन्दिरे विद्यमानं निपानद्वयं यदा नलिकाजलेन सकृदेवं पर्यपूर्यत जलाधिकृतैस्तदा प्रवर्तमानं व्यतिकरमवलोकमानानां मनसि नातिपूर्वं संवृत्तो जयप्राणीयरोषायणयोर्मूर्तिमानिव संग्रामः प्रादुरभूत् । अहो महतीयं विडम्बना ! सर्वथा परां काष्ठामारूढं सलिलदा-

रिद्यस्येदानीं कोल्हापुरमिति प्रकाशयन्तो विषीदामः ।

---

अवसरेऽस्मिन् पौरसुखहेतोर्वाप्यादिनिर्माणमत्यन्तमावश्यकमिति किल बालोऽप्यवगन्तुं प्रभवेत् । कोल्हापुरे पुना राज्ञा वा प्रज्ञावत्तमैर्वा राजपुरुषैर्नैतदंशतोऽपि विचिन्तितमिति न जानीमः किमत्र निदानमिति । यान्त्रिकवापिकानिर्माणं च नात्र दुष्करं तथापि नैतद्विहितम् । सर्वथा गरीयो दुर्भाग्यं कोल्हापुरीयाणाम् । दूरीकरोतु भगवान्मवदेतदमचिरादेवेति प्रार्थयामहे ।

---

विदितप्राय एवेदानीं वाराणसेयो भिक्षुः कृष्णानन्दो नाम संस्कृतचन्द्रिकायाः पाठकमहाभागानाम् । सोयं सांप्रतं सकेश्वरपीठाधिष्ठितान् श्रीमज्जगद्गुरुचरणान्विज्ञापनापदेशेनादिशति यन्नास्ति श्रीमतामधिकारः शिष्यं बहिष्कर्तुमित्यादि । न जानीमः केन वा प्राड्विवाकपदमारोपितोऽयं वार्धकातिशयविगलितप्रज्ञो भिक्षुर्येनैवं निर्णयति । शिष्यस्वामिबहिष्करणे विद्यते न वा वृद्धजगद्गुरूणामाधिकार इत्यन्यदेवैतत । कृष्णानन्दस्य पुनर्यतेः क इव तद्विचारेऽधिकार इत्येव न जानीमः। किमिति वा विधायाव्यापारेषु व्यापारं स्मार्यते पञ्चतन्त्रीयः कीलोत्पाटी वानरः कृष्णानन्दयतीन्द्रेणेति चिराधापि विचारयन्तो न प्रतिपद्यामहे ।

---

शिवराजमहोत्सवः— कस्य वा न विदितो भूतलवर्तिनोऽक्षरमुखस्य महाराष्ट्रवीरः समुद्धर्ता पारतन्त्र्यादखिलस्य भारतवर्षस्य मतिमत्तमः परा काष्ठा शौर्यस्य छत्रपतिः श्रीशिवराजो नाम । अस्य च जन्मदिने राज्याधिरोहणदिवसे च विधीयन्ते महोत्सवाः कृतज्ञतमैर्महाराष्ट्रीयैः । वत्सरे पुनरस्मिन् महाराष्ट्रेष्विव वङ्गेष्वपि स्थाने स्थाने संवृत्तोऽयं महोत्सव इति सविशेषं नन्दामः । समभिनन्दामश्च गुणगृह्यतां वङ्गीयबन्धूनाम् । जयप्राणेष्वपि सोऽयं महोत्सवः संवृत्तस्तत्र च केनापि जयप्राणीयेनैव पण्डितेनाधिकृत्य श्रीशिववीरचरितं हृदयङ्गममुपन्यस्तामिति च जानन्तः सविशेषमेव प्रमोदामहे ।

---

यत्किल परित्यक्तं माण्डलिकदण्डाधिकरणिकपदं सुगृहीतनाम्ना श्रीसुरेन्द्रनाथवन्द्योपाध्यायमहोदयेन तदेत्पुनरप्यङ्गीकृतमिति समवगच्छन्तश्चित्रीयामहे । न जानीमः कोऽत्र हेतुरिति ।

---

महीशूरप्रधानामात्यपदमधिष्ठिते भूतपूर्वस्यानन्दूरसाचिवे श्रीमति माधवरावमहोदये रिक्तीभूते साचिवपदे सम्प्रति आर. रामचन्द्रराय इति कोपि मतिमतां धौरेयः संमाननीयतमश्च महात्मा नियोजितः स्यानन्दूरराजेनेति प्रशंसामस्तमामुचितकारित्वमेतस्य । सुखयतु श्रीमान्माधवराय इवायमपि स्यानन्दूरप्रजाश्च तद्राजं चेति काम्यतेऽस्माभिः ।

---

गरीयः खल्विदानीं महाराष्ट्रेष्विव वङ्गेष्वपि दुर्भिक्षम् । धान्यादीनामभावाद्व्याकुलीभवन्त्यनेके पुरुषाः । आलम्बन्ते च केचिद्दग्धजठरप्रचोदिता वृत्तिं स्तेनानाम् । फरीदपुरनगरान्तःपातिनि च ग्रामे शतत्रयी पुरुषाणां कामपि धान्यप्रपूर्णां कस्यापि वणिजो विपणीं व्यलुण्ठीत । अस्य किल जठरस्यार्थे गृहीतमेतद्भवदीयं धान्यमस्माभिरागामिनि वत्सरे प्रतिदीयेतेति च विपण्यधिपनाम्ना पत्रिकामेकां विलिख्य स्वाक्षरीकृत्य च विपणावस्यां समवस्थाप्यामी प्रायासिषुः । पत्रिकायामस्यां धान्य मेतदपहृतवतामशेषाणामपि पुरुषाणां स्वाक्षराणि विद्यन्त इति श्रूयते । अहो शोचनीयावस्थितिरिदानीं वङ्गीयानाम् !

---

सुप्रथिततमे वैदेशिकानां प्रवातासेवनप्रदेशे भारतवर्षीये सिमलास्थाने भूकम्पः समुद्भूतः । न जानीमः कियत्यो वा विपदो विलिखिता विधात्रा ललाटे भारतवर्षस्य कदा च निस्तरेदेता एतदिति ।

---

लवपुरीयबाष्परथाधिष्ठाने कयापि यौरोपीयललनया समादिष्टः कोपि रक्षापुरुषो नायमस्या आधिकार इत्याकलयन्नादेशमिमं नान्वतिष्ठादिति प्रकुपितया वनितयाऽनयाऽऽहूय कमपि गौरकायं यथाभिलाषं ताडितोऽयं रक्षापुरुषः । प्रविष्टः किलाभियोगोऽयमाधिकरणमिति श्रूयते । मूढः किलायं रक्षापुरुषो यो न जानाति गौराङ्गवनितानामधिकारम् ।

---

नाद्यापि प्रशान्तो रोषायणप्रदेशे प्रजोपप्लवः । भूयांसो हि लोका अद्यापि विमनायन्ते भूयांसश्च प्रत्यवतिष्ठन्त इति । यश्चात्र यहुदीजातीयानां संहारः संपद्यते सोऽयमवश्यमवबोधयाति वनचरप्रकृतितां रोषायणीयानामिति नात्र नः संशयलेशोऽपि ।

---

आपगणाधीशो वत्सरेऽस्मिन्किमपि वार्तापत्रं प्रादुष्कारयितुमभिलषतीति श्रूयते ।

---



शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

त्रयोदशखण्डस्य ] १८२८ शाकपौषमासस्य [ दशमसंख्या

## मासावतरणिका ।

यस्यासेव्य मरन्दमन्वहमगाः सौहित्यमन्याद्दृशं
मोदाद्यस्य परागधूलिषु लुठन् गुञ्जारवं चाकृथाः ।
तस्मिन्कालवशाद्विशुष्यति वने पङ्केरुहाणां, सुखं
पौषे भृङ्ग सुमान्तरेषु विहरन्नूनं कृतज्ञो भवान् ॥

## सुभाषितानि ।

त्वं मन्दिरद्रविणदारतनूभवाद्यै-
स्तृष्णातमोभिरनुबन्धिभिरस्तबुद्धिः ।
क्लिश्नास्यहर्निशमिमं न तु चित्त वेत्सि
दण्डं यमस्य निपतन्तमकाण्ड एव ।
सिंहः सुखं निवसतादचलोपकण्ठे
सोत्कण्ठमेणनिचयश्चरतात्स्थलीषु ।
सत्त्वाः परेऽपि विपिने विलसन्त्वशङ्कं
नाकं गतोऽयमधुना ननु विश्वकद्रुः ॥

धूर्तेषु मायाविषु दुर्जनेषु स्वार्थैकनिष्ठेषु विमानितेषु ।
वर्तेत यः साधुतया स लोके प्रतार्यते मुग्धमतिर्न केन ॥

रक्तभावं समस्तानां दर्शयेदिह यः पुमान् ।
आदित्यवत्स किं न स्यात्पादाक्रान्तजगत्त्रयः ॥

श्रीशिवः शरणम् ।

# मुनिप्रवरः श्रीपाणिनिः ॥

( पूर्वतोऽनुवृत्तः )

प्रकाशितं भगवता पाणिनिना प्रणीतानां प्रबन्धानां प्रतिपाद्यमस्माभिः । अत्र चाष्टाध्याय्यां चतुर्थाध्यायस्य तृतीये पादे वासुदेवार्जुनाभ्यां वुन्निति विद्यते सूत्रम् । तेन च परस्परसहचरितयोर्वासुदेवार्जुनयोः सुप्रथितयोर्यादवपाण्डवयोर्ग्रहणात् तयोश्च व्याससमानकालिकत्वादर्थादेवायातं श्रीमतो व्यासादर्वाचीनत्वं मुनिप्रवरस्य श्रीपाणिनेरित्याहुः । वयं तु नात्र साहचर्यनियमप्रवृत्तिः । अर्थविचार एव तस्य प्रवृत्तेः । अत्र पुनः शब्द एव तात्पर्यं नार्थ इति न साहचर्यमादायार्थापनं युक्तमिति ब्रूमः । यथा च भगवतः पाणिनेर्व्यासतोऽर्वाचीनत्वं तथा साधितमेव प्रमाणान्तरैः प्राक् ।

शिक्षायाश्च पाणिनिशिष्यप्रणीतत्वं केचिदर्वाचीना इव प्राचीना अप्याहुः । वासुदेवदीक्षिता हि बालमनोरमायामित्थमेव निबध्नन्तीति । किन्तु नात्र किमपि प्रमाणं नाम पश्यामः । तस्मै पाणिनये नम इत्यादीनां त्वन्ततो विनिवेशितानां पद्यानां क्वचिदुपलम्भात्क्वचिच्च पुस्तकेष्वनुपलम्भात्सुस्पष्टमेव प्रक्षिप्तत्वमिति । एवं च यथाऽष्टाध्यायी च धातुपाठश्च गणपाठश्च लिङ्गानुशासनं चैवमेव शिक्षापि भगवता पाणिनिनैव संग्रथितेत्यभिप्रेयतेऽस्माभिः ।

अथेदानीं पाणिनीयानि सूत्राण्युपजीव्य विरचितानां प्रबन्धानां पाणिनीयसूत्रव्याख्यानां च संक्षेपतः स्वरूपं निर्दिश्य प्रबन्धमेनमुपसंहर्तुमिच्छामः ।

पाणिनीयसूत्राणां किल सर्वतः प्राथमिकं च प्रमाणमूर्धन्यभूतं च व्याख्यानं महाभाष्यं नाम । एतच्च भगवता पतञ्जलिना प्रणीतम् । एतदेवोपजीव्य कृतानि तानि तानि पाणिनीयसूत्राणां व्याख्यानानि पण्डितैरपरैः । यत्किल सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः । इति भाष्यलक्षणं तद्यथावत् समन्वेति नैवमपरत्र प्रायेण । अत्र चाध्यायमपहाय येऽन्ये प्रकरणविच्छेदास्ते किलाह्निकपदेन व्यवह्रियन्ते । बहूनि चैतान्याह्निकानि प्रत्यध्यायम् । यथा पस्पशाह्निकं प्रत्याहाराह्निकमित्यादीनि ।

विरलाः खल्विदानीमामूलचूडं महाभाष्यस्याध्येतारः प्रायेणास्मद्देशे । नवाह्निकान्तमेव ह्यधीयत एते तदिदमिति । एतच्च भाष्यं रावणेन नाम केनापि पण्डितेन कस्मिंश्चिदरण्ये शिलासूत्कीर्णम् । तच्च समवाप्य श्रीमता भर्तृहरिणा व्याख्यातम् । व्याख्या चेयं पद्यमयी । सा चेयं वाक्यपदीयमित्याख्यायते । प्रमाणीक्रियते च प्रामाणिकैः । एषाऽपि च हेलाराजेन व्याख्याता । ततः परं पुनः सुबोधपदमपि दुरूहव्यङ्ग्यं महाभाष्यं व्याचिख्यासुः श्रीमान्कैयटः श्रीमता भर्तृहरिणा प्रणीतं वाक्यपदीयमेवावलम्ब्य प्रणिनाय भाष्यप्रदीपाख्यां व्याख्यां महाभाष्यस्य । एतच्च भाष्याब्धिः कातिगम्भीरः काहं मन्दमतिस्तथा । छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् । तथापि हरिबद्धेन सारेण ग्रन्थसेतुना । क्रममाणः शनैः पारं तस्य प्राप्ताऽस्मि पङ्गुवत् । इत्येतेन तदीयेनैव पद्यद्वयेन प्रतीयते । महाभाष्यप्रदीपश्च शेखरकृता श्रीमता नागोजीभट्टेन व्याख्यातः । व्याख्यानं चैतद्भाष्यप्रदीपोद्योत इत्याख्यायते । अस्ति च भाष्यप्रदीपविवरणं नाम भाष्यप्रदीपस्यापरमपीश्वरानन्दविरचितं व्याख्यानमिति श्रूयते ।

महाभाष्यस्य चातिदुरूहतां च सुविस्तृततां चावगत्य सरलेन नातिदुर्बोधेन च यथा पाणिनीयसूत्राणि भाष्यानुसारेण सूत्रक्रमेण च व्याख्यातुमभिलष्यञ्श्रीमाञ्जयादित्यो नाम वैयाकरणप्रवरः काशिकाख्यां व्याख्यां प्रणिनाय । अयमेव च जयादित्यो वामनापरनामेति तर्कवाचस्पतिप्रभृतयः प्राहुः । यद्यपि व्याख्येयं भाष्यमनुसरत्येव तथापि क्वचिद्भाष्यानुक्तमप्यर्थमाचष्टे । एष च प्रत्याख्यातः स्वीयेषु प्रबन्धेषु श्रीमद्भिर्भट्टोजीदीक्षितचरणैः । काशिकायाः प्रणेता च काव्यालङ्कारसूत्राणां विरचयिता च वामन एक एव वा भिन्नौ वा तावेतावितितु वामनकालनिर्णये विचारयिष्यते । एषा च काशिका तत्रभवता श्रीमता हरदत्तेन व्याख्याता । अयमेव च श्रीमान्हरदत्तः परमशाम्भवः श्रुतिसूक्तिमालायाः संदृब्धेति प्रामाणिकाः । एतत्प्रणीता चेयं व्याख्या पदमञ्जरीति च न्यास इति चाख्यायते । काशिकावृत्तिरिति च वृत्तिरिति च काशिकाया एवापरं नाम । एषा च वृत्तिः शिशुपालप्रणेतुर्माघतो महाभाष्यप्रदीपकर्तुः श्रीमतः कैयटाच्च प्राचीना । माघो हि शिशुपालवधे अनुसूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना । इति शब्दविद्यां विशेषयन्नवबोधयत्यात्मनः प्राचीनतां वृत्तेः । अनेकेषु च स्थानेषु इति वृत्तिग्रन्थ इति निबध्नन्कैयटोऽपि स्पष्टयति स्वस्मात्प्राचीनतां तस्याः ।

द्वितीया च पाणिनीयसूत्राणां व्याख्या सूत्रक्रमानुसारिणी प्रसादाख्या। एषा च विठ्ठलेन नाम केनापि पण्डितेन ग्रथिता। व्याख्याता चेयं जयन्तेन। एतच्च व्याख्यानं तत्त्वचन्द्र इत्युच्यते।

तृतीया तु सूत्रक्रमानुसारिणी व्याख्या गूढार्थदीपिनी नाम। सेयं सदाशिवाख्येन पण्डितेन समारचिता।

चतुर्थी च सूत्रक्रमानुयायिनी व्याख्या वैयाकरणसर्वस्वं नाम। एषा च धरणीधरकाशीनाथेन विनिर्मिता। इयं च सोदाहरणा च वार्तिकापेक्षितांशसहिता च हरिकारिकाद्युपेता चेति श्रूयते। नाद्याप्यसौ नयनगोचरतामुपारूढाऽस्माकम्।

पञ्चमी पुनः सूत्रानुसारिण्येव व्याख्या शब्दकौस्तुभं नाम। सेयं सिद्धान्तकौमुदीं विरचितवद्भिः श्रीमद्भिर्भट्टोजीदीक्षितचरणैरेव प्रणीता। एषा च भाष्यगता एव युक्तीः सम्यगुपदर्शयति नव्याश्च काश्चिदुपनिबध्नाति। यद्यपि दुरूहं भाष्यमिति सुखेनैव पाणिनीयव्याकरणतत्त्वावबोधाय संग्रथिता व्याख्येयं दीक्षितचरणैस्तथापि खल्वसौ सुतरामेव दुर्बोधतामापन्नेति नात्र सन्देहः। सुलभा चेयमिदानीं भाग्यवशाद्भारतवर्षीयाणाम्। तथापि नैव सामग्र्येणोपलभ्यत इति विषीदामः खल्वेतदभिदधानाः। कौस्तुभं चेदं श्रीमता वैद्यनाथेन व्याख्यातम्। एषा च व्याख्या प्रभेति व्यवह्रियते। विरलतमप्रचारा चेयमिदानीम्। अयमेव च वैद्यनाथः कुवलयानन्दकाव्यप्रदीपादीनां व्याख्यातेति प्रतीयते।

षष्ठी च सूत्रानुसारिणी व्याख्या श्रीमतान्नम्भट्टेन विनिर्मिता। इयं चान्नंभट्टीया वृत्तिरिति व्यपदिश्यते। सुबोधा चातिसंक्षिप्ता च सरला च सोदाहरणा च च्छात्रजनोपयोगिनी चेयम्। न चाप्यसौ व्याख्यानसापेक्षेत्यत एव मन्यामहे नास्ति किमपि व्याख्यानमेतस्या इति।

अस्ति च निखिलतन्त्रनिष्णातेन सकलश्रुतिपारदृश्वना च श्रीमता माधवाचार्येण संग्रथिताऽपरापि कापि पाणिनीयसूत्राणां व्याख्या। न खल्वसौ काशिकादिवत्सूत्रानुसारिणी नापि वा सिद्धान्तकौमुद्यादिवत्प्रक्रियानुसारिणी किन्त्वन्यादृशमेव स्वरूपमेतस्याः। अस्यां हि धातुपाठक्रममनुसृत्य धातुरूपसाधनव्याजेन समुद्धृत्य व्याख्यातानि पाणिनीयानि सूत्राणि। जटिला चेयमित्यत एव मन्यामहे नास्ति पठनपाठनप्रचार एतस्या इति। वस्तुतः पुनरतिमात्रमेवेयमुपयुक्ता च दुरूहभाव्यप्रबलयुक्तिजालसमुल्लसिता चेति नात्र सन्देहः।

येन किल क्रमेण विरचितानि पाणिनीयानि सूत्राणि नायमुपयुक्तः प्रायेण च्छात्राणाम् । अत्र हि नैकत्रैवोपलभ्यन्ते तत्तत्प्रक्रियोपयुक्तानि सूत्राणि किन्तु विभिन्नविभिन्न एव प्रदेश इति । अत एव च सन्ध्यादिकं किमपि साधयितुकामानां बुद्धौ नैतानि युगपदेवोपतिष्ठन्ति । ततश्च क्लिश्यन्त्यध्येतार इत्येवमाकलयद्भिः किल कैश्चन पण्डितैः संकलय्य तत्तत्प्रक्रियोपयुक्तानि तानि तानि सूत्राणि प्रक्रियानुसारेणैव व्याख्यातानि । एवंविधेषु च पण्डितेष्वादिमः श्रीमान् रामचन्द्राचार्यः । एतेन किल प्रणीता प्रक्रियाकौमुदी । इयं च नातिविस्तृता । सूत्राण्यप्यस्यां न सिद्धान्तकौमुदीवत्सर्वाण्येवोद्धृतानि । किन्तु कतिपयानि प्रथितलौकिकशब्दसाधनोपयुक्तान्येव । एषापीदानीं नोपलभ्यते सामग्र्येण। उपक्रान्ता तु ग्रन्थप्रदर्शिन्यां प्रकाशयितुं विजगापत्तननिवासिना श्रीमता रङ्गनाथशास्त्रिमहोदयेन भारतवर्षीयाणां रसिकत्वातिशयाद्वा संस्कृतभाषायां प्रणयातिरेकाद्वा सह ग्रन्थप्रदर्शिन्याऽर्धं एव विच्छिन्ना । पठनपाठनप्रचारः पुनरस्याः प्रायेण नासीदेव । अस्ति चास्याः श्रीकृष्णपण्डितप्रणीतैका टीकेति श्रूयते । अपरा च प्रक्रियानुसारेण सूत्राणां व्याख्या श्रीमद्भिर्भट्टोजीदीक्षितचरणैः प्रणीता । एषा च न किल न विदिता कस्यापि भारतवर्षीयस्याक्षरसुखस्य । अद्यापि च सर्वत्रैव गरीयान्प्रचार एतस्याः । इयमेव ह्यादितोऽधीयते वैयाकरणत्वमात्मनः कामयमानेन । इयं चेत्सम्यगधीयेत तदा शक्येत स्वयमेव भाष्यमपि लापयितुम् । अथवाऽस्या एवाध्ययनेन गतार्थत्वात्प्रयोजनमेव नास्ति महाभाष्याध्ययनस्येति मन्यन्ते वैयाकरणाः । तथा ह्याहुः । कौमुदी यदि कण्ठस्था वृथा भाष्यपरिश्रमः । इति । सुव्यवस्थिता चात्रत्या विषयविनिवेशनशैलीति नात्र नः स्तोकोऽपि सन्देहः । किन्तु विद्यत एवात्रापि मनागिव परिवर्तनापेक्षेति नो बुद्धिः । तथा हि । तद्धितेषु प्रथमान्तादीनां क्रमेण विनिवेशनमपेक्ष्यते । सम्प्रति ह्यनधीततद्धितैस्तदर्थज्ञानसमर्थैरपि न शक्यते युगपदेव स्वाभीष्टं प्रत्ययं वा तद्घटितं रूपं वा विज्ञातुम् । प्रथमान्ताधिकृतादितद्धितानां क्रमेण विनिवेशने तु विनैव परिश्रममवगच्छेयुरेतज्जिज्ञासवः । विहिता चेयं प्रकरणव्यवस्थाऽऽशुबोधादिषु श्रीमद्भिस्तारानाथतर्कवाचस्पतिप्रमुखैर्महाभागैः । भवति चानयाऽध्ययनसौकरीति श्रूयते । किं च तिङन्तेऽपि सार्वधातुकानामार्धधातुकानां च प्रत्ययानामेकत्रैव संनिवेशः सिद्धान्तकौमुद्यां विद्यते । तेन च भ्वादि गणे भूधातोर्लुङि य आदेशो वा य आगमो वा यः प्रत्ययो वा भवति स

तत्रैव द्रष्टव्योऽस्तेः पुनरन्यत्र दीव्यतेस्तु ततोऽन्यत्र चोरयतेस्तु ततोऽपीतरत्रेति गरीयस्येवासावसौकरीति नैतद्दुरवबोधम् । न चाप्यस्यार्धधातुकेषु गणकृत्यं किमपि येन तत्तद्गणप्रकरणे तत्तद्धातुप्रक्रियायामेव प्रत्यया अमी विनिवेश्याः स्युः । अत एव च पृथगेवामीषां प्रकरणमुपनिबन्धनीयमित्यभिप्रेमः । उपनिबद्धं चैवं मुग्धबोधादिषु । एतेन च गणकार्यसापेक्षाणि लडादिलकारपञ्चकस्य रूपाणि तेषु तेषु गणेषूपलभ्यन्ते । लुङादीनां पुनस्तत्तत्प्रकरणे । लुङादिप्रकरणस्य पार्थक्येनोपनिबन्धनाच्च झगित्येव स्मृतावुपारोहन्ति तानि तानि कार्याणीति ।

सिद्धान्तकौमुदी चेयं बहुभिरेव पण्डितैर्व्याख्याता । प्रथमतस्तावदियमस्या निर्मातृभिः श्रीमद्भिर्भट्टोजीदीक्षितैरेव विवृता । एतद्ग्रथिता च व्याख्या प्रौढमनोरमा नाम । अस्ति चास्यां शब्दरत्नाख्यमेकं व्याख्यानम् । एषा पुनः कुचमर्दिनी नाम पाणिनीयसूत्राणां व्याख्यां प्रणीतवता पण्डितराजेन श्रीमता जगन्नाथेन खण्डितेति श्रूयते । कुचमर्दिनी तु नेदानीमुपलभ्यते ।

द्वितीया पुनः सिद्धान्तकौमुद्या व्याख्या श्रीमता नागोजीभट्टेन विनिर्मिता शब्देन्दुशेखराभिख्या ।

द्विविधश्चायं शेखरो बृहँल्लघुश्चेति । इदानीं तु प्रायशो लघुरेव सुप्रचारः । शेखरेऽपि चिदस्थिमालाभैरव्यकाण्डताण्डवप्रभृतयो भूयस्यो व्याख्याः समुद्भासन्ते ।

तृतीया पुनः कौमुदीव्याख्या तत्त्वबोधिनी नाम । ज्ञानेन्द्रसरस्वतीप्रणीता चेयम् । सरला किलेयमुपकरोति व्याकरणे प्रविष्टानां छात्राणाम् ।

चतुर्थी च बालमनोरमा नाम । एषा च दाक्षिणात्येन श्रीमता वासुदेवदीक्षितेन निर्मिता । नितान्तमेव सरला सुबोधा च । न चाप्यस्यां न विद्यन्ते ते ते शास्त्रार्थाः । तथापि नामी तथोपनिबद्धा यथा दुरवबोधतामुपगच्छेयुः । नासीदसावद्ययावत्सुलभा । संप्रति पुनरुपक्रान्ताऽसौ टेप्पाकुलमित्याख्ये नगरे संमुद्रयितुम् ।

पञ्चमी पुनर्व्याख्या भावप्रकाशो नाम । विदितैव चेयं संस्कृतचन्द्रिकायाः प्रणयिमहाभागानाम् । एषापि श्रीरङ्गनगरे समारूढेदानीं मुद्रणयन्त्रम् । वाराणसेयसम्प्रदायानुसारिणी चातिमनोहरा चेयम् ।

सिद्धान्तकौमुद्यपि गरीयसीति प्रायेणाल्पमतीनामुपकाराय संक्षिप्यैनां प्रणीता लघुकौमुदी मध्यकौमुदी च पाणिनीयतन्त्रनिष्णातेन श्रीमता वादराजेन॥ उपकारकं चैतत्कौमुदीद्वितयं बालानाम् ।

एवमेतन्नानाविधाभिर्व्याख्याभिः पल्लवितमलङ्करोति भारतं वर्षं पाणिनीयं व्याकरणम् । तदेवं प्रदर्शितमस्माभिर्योऽयं भगवान्पाणिनिर्यदा चायमुद्भूतो ये च प्रणीताः प्रबन्धा एतेन याश्च तेषां व्याख्या यानि च तासामपि व्याख्यानानीति संक्षेपात् । व्याख्यानादिगतो विशेषस्तु तत्तत्प्रणेतुः पण्डितस्य कालनिर्णये वक्ष्यत इति शिवमखिलम् ।



# प्राप्तपत्रम् ।

श्रीश्रीदुर्गा शरणम् ।

प्रियचन्द्रिकासम्पादक !

कृपया प्रकाश्यतामिदं चन्द्रिकायामेतदेव सप्रणामं निवेदनम् ।

अयि भोः संस्कृतचन्द्रिकाप्रणयिनो महाभागाः !

कृपयाऽधोलिखितविषये निपात्यतां तावद्दृष्टिः श्रीमद्भिरित्यसकृत् प्रार्थयामहे ।

दृश्यते हि मार्कण्डेयपुराणीयदेवीमाहात्म्ये श्रीमेधोमुनेर्मुखाद् देव्याः प्रभावमाकर्ण्य भगवत्याः सन्दर्शनार्थं कस्मिंश्चिन्नदीपुलिने सुरथसमाधिभ्यां देव्या मृन्मयीं मूर्तिं निर्माय पूजनमकारीति ।

**तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ।**
**अर्हणाञ्चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥ इत्युक्तेः**

मूर्तिस्वरूपमग्रे विशेषेणोक्तत्वात्कीदृशी मृन्मयी मूर्तिर्विधाय ताभ्यां समार्चितेति अत एव शङ्का समुदेति ।

**भगवन् का हि सा देवी महामायेति यां भवान् ।**
**ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ॥**

इत्यादि सुरथनृपप्रश्नानन्तरं भगवता मेधसा प्रथमं तामसी शक्तिरनन्तरं राजसी शक्तिः पश्चात् सात्त्विकी शक्तिरित्येवं शक्तित्रयस्वरूपं बाहुल्येनैव वर्णितम् ।

तामस्याः पूजने त्वेतस्याः स्वरूपाकथनात् महीमयी मूर्तिर्न गम्यते, बाहुल्येनैव । राजस्यर्चनेऽपि दिशो भुजसहस्रेण समंताद्व्याप्य संस्थितामित्यादिदर्शनात् तथाविधाया मनुष्यमात्रैः कर्तुमशक्यत्वात् अस्याश्च अम्बिकाकौशिकीचामुण्डादिनानाविधरूपसङ्कुलत्वात् । सा च न सम्भवति ।

अत एव प्रियमहाभागाः ! सप्रणयं सानुरागं चानुयोगो भवतु, कीदृशीं वा मूर्तिं निर्माय भक्ताग्रणीभ्यां सुरथसमाधिभ्यां जगदम्बाऽपूजि ? भक्तानुग्रहकारिणी सर्वेश्वरी च सा कया वा मूर्त्या तयोः प्रत्यक्षाभूत् । कृपया सप्रमाणमिदं प्रकाश्यतां चन्द्रिकायां महाभागैरिति साञ्जलिबन्धं पुनरपि प्रार्थयामहे । अपि च कुत्रासीत् मेधसो मुनेराश्रमः ? यस्यास्तीरे ताभ्यां देवी सम्पूजिता किमाह्वया सा सरित् एतदपि कृपया प्रकाश्यताम् ।

**कामरूपान्तर्गत ( आसाम ) सौमरपीठ-**
**वास्तव्यस्य श्रीकीर्तिचन्द्रशर्मणः ।**

श्रीशः शरणम् ।

# मधुपाष्टपदी ।



पुरा यस्यामस्यामकृत मधुपः केलिमुदिते
निपीय स्वाद्यं तन्मधु मदकलस्तूः सवितरि ।
स एवायं सायं झटिति चपलस्तां कमलिनी-
मपास्याऽऽसक्तोऽस्मिन्नधिकुमुदिनि स्त्रैणनिपुणः ॥ १

वसन्ते वासन्तीं मधुप ! नवमल्लीमाधितपं
श्रितो, वर्षास्वेतां भजसि मुदितः केतकलताम् ।
घनापाये प्रीत्या श्रयसि सरजस्कां कमलिनीं
विहाय त्वां स्त्रैणं कथय कमिहाऽयं कथयतु ॥ २

अयं मत्तो दन्तावलपरिवृढो नास्य मधुप
त्वया कर्णाभ्यर्णे मदकणदुराशापरतया ।
कदाचिद्गन्तव्यं, प्रियसख ! न चेन्नातिचिरतो
वियुज्येथाः प्राणैरिति फलमलं प्राप्स्यसि शृणु ॥ ३

शनैर्गुञ्जां तन्वन्मधुप ! मधुरां, सर्पसि पुरः
पुनः सूक्तोक्तीनां कलयसि च पात्रं कमलिनीम् ।
प्रसाद्याऽपि प्रीतः पिबसि मकरन्दासवमिति
त्वदीयं कौशल्यं निरुपममिदं तद्विजयते ॥ ४

अले ! लीलापात्रं त्वमसि कमलिन्याः प्रतिपलं
मुहुः स्वादं स्वादं मधु किमपि निर्वाणमयसे ।
भवेस्तूष्णीं मत्तो द्विपपतिरुपायाति यदयं
न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ ५

सति व्योम्नः पत्यौ ननु कमलिनीशे मधुकर !
त्वया भ्रामं भ्रामं बत परिचितैषा कमलिनी ।
गतेऽस्ताद्रिं तस्मिन्निह विशसि निःशङ्कहृदयः
सखे ! केषां शिक्षाविधिरयमधीतः कथय भोः ! ॥ ६

सरस्यामेतस्यां प्रतिकमलिनि भ्राम्यसि मुहु-
श्चिरं पायं पायं मधुप मधुनिष्यन्दमतुलम् ।
न गच्छन् गण्डेऽस्मिन्स्फुरदुरुमदाक्ते करटिनो
मनाक्जिह्वेषि त्वं, विलसति दुराशाव्यतिकरः ॥ ७

चिरं ध्यायं ध्यायं मधुरमसकृन्निःस्वनमिह[1]
ध्वनिप्रौढौदार्यं[2] कलयसि[3] सुवर्णाननतया[4] ।
सुधां वारं वारं रचयसि मुधा, वर्णयसि च
प्रशस्यां तामेतां बत कमलिनीं तत्कविरसि ॥ ८

भट्टः कविः श्रीबलभद्रशर्म्मा व्यधादिमामाश्विति येऽत्र दोषाः ।
ते मर्षणीया दयया कवीन्द्रैर्बद्धाञ्जलेरेष ममानुरोधः ॥ ९

गोकुलस्थभट्टोपाह्वत्रिगृहदेवकीनन्दनात्मजकविकाव्य-
रत्नाकरभट्टश्रीबलभद्रशर्मकृतिषु
समाप्तेयं मधुपाष्टपदी ।
श्रीकृष्णार्पणमस्तु ।

---

# उदरप्रशस्तिः ।

यत्सत्तया जगत्सत्ता यदर्थं चेष्टते जगत् ।
तस्मै नमोऽस्त्वनन्ताय ब्रह्मणे जठराय च ॥ १

अणीयोऽप्यणुतो नूनं महीयोऽपि महीयसः ।
प्रत्यक्षमुदरं ब्रह्म तदन्यत्कल्पनामयम् ॥ २

अशेषेभ्योऽपि यत्प्रेयस्तद्ब्रह्मेति किल श्रुतिः ।
न चोदरात्परं प्रेयस्तद्ब्रह्म किमतः परम् ॥ ३

विचीयतां सुनिपुणमासमुद्रं महीतलम् ।
उदासीनो न लक्ष्येत जठरे जातु कश्चन ॥ ४

जगन्निखिलमप्येतज्जठरेणैव धार्यते ।
विप्रयोगादमुष्यैतद्याति यन्नामशेषताम् ॥ ५

मर्यादा भूतलस्याब्धिर्ब्रह्माण्डं जगतामपि ।
उदरस्य तु संदृष्टा मर्यादेति न काचन ॥ ६

---

१ निःस्वनं यथा स्यात्तथा, शब्दं च । २ निःस्वनस्य विशेषणमिदं, क्रियाविशेषणञ्च । ३ करोसि, शब्दायसे च । ४ सुन्दरा मनोहरा वर्णा अक्षराणि यस्मिंस्तत्, सुवर्णमिवाननं च । भ्रमराणां पीतमुखत्वदर्शनात् ।

आस्तां शरीरिणामेतत्करणानां कदम्बकम् ।
अक्षेणेव विना चक्रं विफलं तद्विनोदरम् ॥ ७
जातिः प्रयातु पाताले कुलं विलयमृच्छतु ।
गौरवं रौरवं यातु जठरं विक्रमस्तु नः ॥ ८
न जानीमो महाभागः कोऽयमस्ति धरातले ।
आराधयति शर्मेप्सुर्जठरं यो न जात्वपि ॥ ९
मुनिर्वल्मीकजन्मा वा भगवान्वाऽपि बादरिः ।
यथावन्न प्रभावन्तेऽभिधातुमुदर प्रभुः ॥ १०
अस्मादृशस्तु मनुजाः प्रकृत्या मितबुद्धयः ।
कथं तदेनमाख्यातुं भवेयुः प्रभविष्णवः ॥ ११
तथापि प्रयते तत्र यावद्बुद्धिबलोदयम् ।
गुणगानं यदीशस्य नित्यं कर्मानुजीविनाम् ॥ १२
विक्रमं भवतो वीक्ष्य जगत्त्रयविसृत्वरम् ।
को हि नाम सचेतास्त्वां नोदर स्तोष्यति स्वयम् ॥ १३
यत्तु मे स्खलितं किञ्चित्प्रवृत्तस्यात्र कर्मणि ।
तत्त्वं जठर संप्रीतमशेषं संवरिष्यसि ॥ १४
पाणिस्त्वदर्थमादत्ते त्वदर्थं चक्षुरीक्षते ।
त्वदर्थं व्रजतः पादौ यतरप्युदरानिशम् ॥ १५
अनुलिप्तेव सुधया त्वत्कृते समुदीर्यते ।
अविमृश्य गुणं वाणी दुष्प्रभूणां पुरो बुधैः ॥ १६
त्वां संभावयतामग्रे श्रोत्रिया अपि बन्दिनः ।
मृगयूनामिव पुरश्चेष्टन्ते विश्वकद्रवः ॥ १७
उद्गिरन्तोऽपवादौघान्कुलशीलाभिधारितम् ।
जठर त्वत्कृते सत्यं जुहत्यग्निषु साग्नयः ॥ १८
अविसंवादिनी नृणां त्वत्कृते बाह्य आकृतिः ।
विसंवादमयी चान्तर्विपक्वेन्द्रवारुणी ॥ १९
छिन्दन्ति यत्फलच्छेदं शिरांसि प्रतिविद्विषाम् ।
सहेलमेव भूपालाः प्रभावः स तवोदर ॥ २०
परानाक्रम्य विषयान्पीडयन्तः करोत्करैः ।
धनं मुष्णन्ति यद्भूपाः प्रभावः स तवोदर ॥ २१
अपि जीवितसर्वस्वैः प्रीणयन्तो महीपतीन् ।
त्वत्कृतेऽमात्यमणयो वञ्चयन्त्युदर प्रजाः ॥ २२

( क्रमशः )

# स्मार्तधर्ममर्म ।

प्रबन्धो (?) ऽयं वृन्दावनधाम्नि निवसता श्रीमता माध्वगौडाचार्येण मधुसूदनलालगोस्वामिना प्रणीतः । विदित एवायं संस्कृतचन्द्रिकायाः प्रणयिनां गोस्वामी । खण्डितो हि स्मार्तधर्माख्यः प्रबन्ध एतस्य स्मार्तधर्ममण्डनं समालोचयद्भिरस्माभिः । तत एव च विज्ञातप्रायाण्येव स्मार्तप्रद्वेषिण एतस्यासमञ्जसतमानि मतानि चन्द्रिकायाः प्रणयिमहाभागैः । स्मार्तधर्ममण्डने खण्डितमात्मनः स्मार्तधर्मप्रबन्धमवेक्षमाणोऽयं गोस्वामी समवलम्ब्य मुखमस्तीति वक्तव्यमिति न्यायं विरचयाञ्चकार तत्खण्डनार्थमुपरिनिर्दिष्टनामानं ग्रन्थम् । किन्तु प्रयासोऽयमेतस्य विनायकं प्रकुर्वतो वानररचनामनुहरति । यदि हि प्रबन्धतोऽस्मात्सुदूरमुत्सार्येताश्लीलो वा ग्राम्यो वाप्यंशस्तदा नूनं त्रिचतुरपङ्क्त्यात्मकोऽप्ययं नावशिष्येत । स्मृतीनामप्रामाण्यं तदुपजीविनां स्मार्तानामधार्मिकता ब्राह्मणमात्रोपास्याया गायत्र्या निष्प्रयोजनता शिखायाश्चानावश्यकतेत्यादयो गरीयांसो विषया उपपादिता एतस्मिन् । अहो धार्मिकत्वं गोस्वामितिलकस्य योऽयमेवमपि नाम प्रलपन्नापत्रपते । अहो गुणग्राहिता गुणपरीक्षकता वा श्रीमतो भारतधर्ममहामण्डलस्य यदयमपि महाभागो धार्मिकप्रकाण्ड इति संभाव्यते । मन्यामहे नैतत्क्षोदक्षमं मर्म । अनुवाचनमात्रमेव हि खण्डनमेतस्य । यावच्च विद्यन्ते धर्मशास्त्रग्रन्थास्तदुपवर्तिनश्चाचारा न खलु तावत्स्मार्तधर्ममर्म वा तत्प्रणेता वा तस्यापि वाऽऽचार्यपरमाचार्यादिः शक्नुयात्स्मार्तानां धर्ममुन्मूलयितुम् । यथा च शिखासूत्रादीनामावश्यकत्वं तथाऽन्यदा प्रतिपादयिष्यामः । यत्तु स्त्रीत्यवज्ञायते च न चेष्यते स्प्रष्टुमपि स्मार्तधर्ममर्मणा सुनिष्ठुरमपि प्रहरन्ती संस्कृतचन्द्रिका तत्परं युक्तम् । मर्म हि नाम न पुमान्नापि चन्द्रिकासजातीया स्त्री तत्कथमिव स्पृशतु चन्द्रिकामेतत् । पुमांस एव स्पृशेयुः कान्तां सौहार्दशालिन्यो वा नार्यो नैव पुनस्तृतीया प्रकृतिरिति । एवमपि यत्प्रकाश्यते पौरुषाडम्बरो मर्मणा तदेतत् प्रकृतिसिद्धमेव तथाविधानामिति नैतदावश्यकमाख्यातुम् । यथा च वयं पश्यामस्तथा स्मार्तैरिव माध्वैर्माध्वैरिव च रामानुजै रामानुजैरिव च शाम्भवैः शाम्भवैरिव च वाल्लभैरपि प्रमाणीक्रियन्ते स्मृतयः समुपास्यते च गायत्री संरक्ष्यते च शिखा धार्यते च यज्ञसूत्रमिति । किमधिकं तुर्याश्रमशालिनामपि विद्यत एवातिदेशिकं शिखासूत्रादिकमिति नैतद्दुरवबोधं धार्मिकः । यथा चैतत्तथा विशदमेव परमहंसोपनिषदादिषु । न जानीमः कथं वा प्रशंसितः प्रबन्धोऽयं हिन्दीपत्रैः कैश्चिदिति । अथवा स्मार्तदोषोद्घोषणोद्भूतः संमोदनिःस्यन्द एवायमेतैर्लेखयामास नैव पुनर्विवेकलेशोऽपीति नात्र संदेह इति कृतं महाजनापवादकस्यास्य मर्मणः स्वरूपपरीक्षणेनेति शिवम् ।

---

सुधाकरः—अये ! कथं नाम गृहीतोऽयं श्रीमत्या ?

लावण्य—किमुच्यते कथमिति ? एष किल स्वयमेव समभ्यतिष्ठन्मे गात्रम्। ( सानन्दोत्साहम् ) भद्रमुख ! अवश्यमचिरादेव भविष्यत्यथो ममोद्वाहः ।

सुधाकरः—कथमिवैतत्प्रतीतं श्रीमत्या ? कच्चिद्बालतामधिष्ठिते कुसुमपतङ्गे परिणयो भवति ?

लावण्यमयी—अथ किम् । एवं किल ब्रवीति मे धात्री देवी । मन्ये नैतद्भवतो विदितमिति ।

इत्थमालपन्त्येव लावण्यमयी यावद्गृहीतप्रसूनपतगैव पलायितुमारभते तावदेव करे गृहीत्वैनां प्राहस्म सुधाकरमहाभागः ।

सुधाकरः—भद्रे ! नाद्यापि निवेदितं श्रीमत्याऽऽत्मीयं नाम ।

लावण्यमयी— अपि नाम नैतद्विदितं महाभागस्य ? नामग्राहमेव ननु मामाह्वयन्ति जना निखिलाः ।

सुधाकरः— स्यादेतत्। मया पुनर्न कस्यापि वदनतः समाकर्णितं ते नाम ।

लावण्यमयी— कथमेतत् ?

सुधाकरः— ह्य एव नन्वत्रानुप्राप्ताः स्मः ।

लावण्यमयी— तदाकर्णयतु महाभागः । मम किल नाम लावण्यमयीति । श्रीमतः पुनः ? ।

सुधाकरः— भद्रे ! मम तु सुधाकर इति ।

लावण्य— किमात्थ सुधाकर इति । अहो मधुरिमा नामाक्षराणाम् ।

सुधाकरः— कच्चित्स्यात्पुनस्ते समागमः ?

लावण्य— अहमपि नन्वेतदेव प्रष्टुमभिलष्यन्त्यासम् । श्रीमता किल प्रत्यहमस्यामेव वेलायामत्रोपस्थातव्यम् । अहं किल कुसुममालिकां संग्रथ्य कण्ठे तवामोचयिष्यामि ।

सुधाकरः— भवतु ।

लावण्य—तन्मुच्यतां तावन्मे पाणिर्यावदापृच्छ्य धात्रीदेवीं प्रत्यागमिष्यामि ।

इत्येवमभिधाय च स्वभावसरलान्तरङ्गा समुदञ्चितस्मिता बालिका लावण्यमयी मन्दं मन्दं ततो निश्चक्राम । प्रत्याजगाम चानतिक्रान्तबालभावः सुधाकरः सकाशं तापस्याः । प्रत्यागतं चैनं सकौतुकं च सप्रसादं च सपरितोषं च सवात्सल्यं च परिष्वज्य मूर्ध्नि चोपाघ्राय तापसी सह तेन नातिदूरवर्तिनीं वृक्षवाटिकां प्रविवेश ।

इति लावण्यमय्यां तृतीयः परिच्छेदः ।

---

# चतुर्थः परिच्छेदः ।

## सरलायाः समागमः ।

अतिक्रान्तानि कियन्तिचिद्वर्षाण्यदर्शनं गतायाः सरलायाः । एषा किल बहिश्चराः प्राणाः श्रीमतो रमेशमहाभागस्येति विसोढवताऽपि दुरुत्तरं विप्रयोगव्यसनं स्वप्नेऽपि न व्यापारितं मनः पुनःपरिणय एतेन । अव्यभिचारि हि भवति महात्मनां प्रेम । विज्ञापितः किलायं पुनः परिणयविषयेऽनेकधाऽनेकैः । किन्तु न व्यचालयदवधारणां स्वीयाम् । अतिगतानि किल प्रायेण द्वादश वत्सराणि दर्शनपथातीतायाः सरलायाः । एतानि पुनरेनां विचिन्तयतैव कथंकथमप्यतिवाहितानि श्रीमता रमेशमहाभागेन । एवं क्षणमेकमपि सरलामविस्मरतः श्रीमतो रमेशस्यान्तरं न जानीमः कुतो वा लावण्यमयीसुधाकरसमागमदिन ऐकान्तिकमदृष्टपूर्वमेवास्वास्थ्यमापेद इति । न किल निदानमस्य स्वयमप्यज्ञायि श्रीमता रमेशेन । विहरतिस्म किल प्रत्यहमेव हृदयेऽस्य श्रीमती सरला । तथापि नन्वसौ दिवसेऽस्मिन्ननालोकितपूर्वमन्यादृशमेव स्वरूपमापन्ना प्रादुरभून्मनस्येतस्य । तदेकताननतां चोपागतवतः समुल्लसेवास्य चक्षुःपथे शरीरिण्या इव सौन्दर्याधिदेवतायाः सरलाया मूर्तिः । तत एव चाधिकाधिकामेव वैयाकुलीमापद्यमानमन्तरङ्गमात्मनो विनोदयितुकामो विनिर्गत्य मन्दिरात्सायन्तनसमीरणासेवनादिभिरत्यवाहयत्समयं कमपि रमेशमहाभागः । अस्तमिते च भगवति दिवाकरे प्रतिनिवृत्तः कथंकथमपि निर्वर्त्य तत्कालनिर्वर्तनीयानि कर्माणि शयनमन्दिरमनुप्रविष्टः सिषेवे क्षीराब्धिफेनपटलपाण्डुरां हंसतूलमयीं शय्याम् । नातिचिरादेव चाग्राहि निद्रया सोऽयम् ।

यथा किल प्राग्द्वादशभ्यो वत्सरेभ्यः प्रगाढं प्रसुप्तः समाकर्ण्य शिशुरुदितं प्राबुध्यत रमेशमहोदय एवमस्मिन्दिवसे विस्मयस्तिमितेनेव मनसाऽवितर्कितमे-

-वायं प्राबुध्यत । अनवगच्छन्निव च किंचिदपि समाचक्रन्द ' प्रेयसि प्रेयसी ' ति क्रियासमभिहारेण । शुश्राव च परिचितपूर्वमिव हृदयग्राहि विडम्बितसुधारसमत्र प्रतिवचनं ' किमाज्ञापयत्यार्यपुत्र ' इति ।

समाकर्णयन्नेव च प्रत्युक्तिमिमां सावेगमेवोदतिष्ठच्छयनीयतलाद्रमेशमहाभागः । नासीदिदानीं प्रदीपः शयनमन्दिर एतस्य । अपावृतान्येव त्वभूवन्वातायनकपाटानि । परिप्लावयामासेव चेदानीं पीयूषरसपूरेण धरातलमशेषं ज्योत्स्ना । अत एव च नासीदभ्यन्तरेऽस्य शयनागारस्य प्रगाढस्तमःप्रसरः । आसीच्च मन्दतमोऽप्ययमालोकः स्थूलस्थूलानामभ्यन्तरवर्तिनामर्थानामालोकने पर्याप्तः । अत एव च शयनतलेऽपि निषीदता प्रत्यक्षीकृतमिदानीं रमेशमहाभागेन यन्मूर्तिमतीव सुकुमारता मनोहराकृतिर्युवतिः कापि मन्दं मन्दमुपसर्पति द्वारोपान्तमिति । तस्याश्च तच्छरीरसौभाग्यं स च सुकुमारमधुरश्चरणविन्यासस्ते च मुहुर्मुहुः परावर्त्य वदनाम्बुजमन्तरान्तरा क्रियमाणाः कटाक्षविक्षेपाः समुत्कीर्णा इवाभवन्नन्तरङ्गपटले श्रीमतो रमेशमहाभागस्य । तया च निभृतमिव गृहीतहृदयोऽयमुत्थाय शयनीयतलात्सरभसमेनामनुगन्तुमारेभे । यावत्पुनर्विन्यस्यत्यसौ पदानि द्वित्राणि तावदेव तिरोदधे मृगेक्षणा सेयम् । ततश्च समुद्घाटितद्वारः किल रमेशमहाभागः सुनिपुणमेव व्यकिरत्तत इतो दृष्टिम् । नैव पुनरासीदसौ नयनगोचर एतस्य । मन्यामहे सेयमाकाश एव लीनेति ।

तदिदमवलोकमानश्च सपदि साध्वसेन समाक्रान्तहृदयो रमेशमहोदयः परिजनानाचुक्रोश । समाकर्ण्य च तदेतदाकस्मिकमाक्रन्दितं सावेगमेव प्रबुध्यमानानां महीयानिवाभवत्संरम्भ एतेषाम् । अकाण्डाक्रन्दभीताश्च संरब्धा इव प्रचक्रन्दुः प्रकृतिभीरवो नार्यः । परिजनोऽपि च समुपसृत्य श्रीमन्तं रमेशमहाभागमाक्रन्दितनिदानमप्राक्षीत् । स पुनर्जाग्रतैवानुभूतमननुभूतपूर्वं स्वप्नमिव सीमन्तिन्यास्तस्याः साक्षात्कारं च तं च श्रवणसुभगं प्रतिभाषितस्वं विचिन्तयन्ननन्यगतमानसः प्रथमतो न किञ्चिदपि प्रत्याह ।

भूयोभूयस्तु साग्रहमेवाभ्यर्थ्यमानः संवृत्याकारं प्रतिजगाद शङ्के प्रविष्टः सदनमास्माकीनं स्तेनः । तदन्विष्यतां तावदयं निपुणमेवेति । निशम्य च सदने प्रवेशं स्तेनस्य साध्वसव्याकुलेन मनसा प्रज्वाल्य प्रदीपिकाः समादाय च करे कुलिशकर्कशान्दण्डान्सुष्ठुतममन्वेषयामासुरशेषेऽपि मन्दिरे परिचारकाः । किन्तु कुतो नामाधिगम्यतां तस्करोऽमीभिः । न किल शक्यत उपलब्धुं मही-

यस्याऽपि प्रयासेन किमप्यसदेवेति । व्यतिकरेण चामुना जाग्रतामेव निखिलानां व्यत्यगादशेषा रजनी । रमेशमहोदयस्य पुनः सुदूरापेतैव प्रस्वापकथा। नयनयुगलं निमीलयत एव ह्येतस्य पुरतः प्रादुर्भूय विहरति स्म संदृष्टपूर्वासौ रमणी । यावत्पुनरसौ ग्रहीतुमेनां कामयमानश्चक्षुरुन्मीलयति तावदेवासौ तिरोधत्ते । तत एव च नान्वभवदिदानीं लेशतोऽपि स्वास्थ्यं मनो रमेशस्य।

इति लावण्यमय्यां चतुर्थः परिच्छेदः ।

---

# पंचमः परिच्छेदः।

अथापरेद्युः कस्मिंश्चन कुटीरे किमप्यबलाद्वयं परस्परं संलपत्समभूत्। तत्रैका परिचितपूर्वैव नस्तापसी । द्वितीया च योगिनी कापि । तत्राह योगिनी–'हुं ततस्ततः'

तापसी—किं ततस्ततः ? अभ्यन्तरं प्रविष्टायामेव मयि प्रबुद्ध आर्यपुत्र इति नोचितमवसरे तस्मिंस्तत्रावस्थानमित्याकलयन्ती निरक्रामम् । स किल मां सरभसमुपेत्य ग्रहीतुमभ्यलषत्। किन्तु सूचीभेद्ये तमसि तत्रैव क्वचन निलीनाऽहमिति विफलमनोरथः संभ्रान्तश्च परिजनात्प्रबोधयामास । अस्मिन्नेव च व्यतिकरे लब्धावसरा सदनतोऽस्मादपाक्रामम् ।

योगिनी—हला ! नैतद्युक्तरूपमनुष्ठितं श्रीमत्या यदासि तदानीमपक्रान्ता। उचितं हि समये तस्मिन्नुपगत्य संभावयितुमेनं श्रीमत्याः ।

तापसी— सखि ! न जाने कुत इति, समाक्रान्तं साध्वसेन वेपमानमिवासीत्तदानीं मे हृदयम् । तत एव च न प्राभूवमुपसर्पितुमेनम् ।

योगिनी—कियन्तं वाऽतिवाहयिष्यसि समयमेवं तूष्णीकैव ?

तापसी—यदत्रधीति लिखितं ललाटे भगवता विधिना। को हि खलु प्रभवति प्रमार्ष्टुं लिखितमेतस्य ?

# प्राप्तपत्रे ।

१

**श्रीहरिः शरणम् ।**

१८२८ पौषसुदि ९ म्याम् । कलिकातातः ।

प्रियचन्द्रिकासम्पादकमहाभाग ! अनुगृह्यतामयं जनो निम्नलिखितस्य प्रबन्धस्य प्रकाशनेन भवतेति विज्ञाप्यते ।

अयि सहृदयशिरोमणयः ! विदितमेवेदं भवतां यत्प्रकाशितो भगवत्सुधाशतकं नाम कोऽपि काव्यग्रन्थः कलिकातायामेव निवसता श्रीमता शिवदत्तकविरत्नेनेति । सोऽयं यथासमयं प्रहितः समालोचनार्थं तेषां तेषां संपादकानां सविधे । संस्कृतरत्नाकरस्य नाम जयपुरे विजयमानस्यैव तु कस्यापि विद्वत्तमैः संपाद्यमानस्य पत्रस्य संपादकेनादितः समारोपितोऽयं समालोचनाक्रकचम् । समालोचना पुनरेषा संदृष्टमात्रैव संपादकस्यास्य मनसि गतं गरीयांसं वैदुष्यदर्पमिव भगवत्सुधाशतकस्य प्रणेतर्यकारणं प्रद्वेषमप्याविष्करोत्येव । एतेन हि नाल्पो गुण एकोऽपि प्रतिपादितः परन्तु दोषा एव केवलमुपवर्णिताः । न किल मे मतं न प्रकाशनीयाः संपादकेन गुणा इव दोषा अपीति किन्तु यथा दोषा एवं गुणा अप्यवश्यं निर्देश्या इत्येव मेऽभिप्रायः । न खलु भगवत्सुधाशतके नैकोऽप्यस्ति दोष इति ब्रवीमि । कविप्रवराणामपि हि कालिदासादीनां काव्येषु विद्यन्त एत इति । तथापि न हि तावता नास्ति कोऽपि गुणः कालिदासादिकाव्येष्विति कोऽपि ब्रूते । ब्रुवाणोऽपि वा नोपहास्यो भवति । भगवत्सुधाशतकेऽपि चेत्सुदूरमुत्सार्य दोषैकदर्शितां न्यक्षेप्स्यदात्मनो दृष्टिं संपादकस्तदा नूनं समद्रक्ष्यद्गुणानपीति नात्र संदेहः । किन्तु कुतः सौभाग्यमेतावत्सारल्यस्य येनैतत्संस्कृतरत्नाकरस्यापि संपादकेन समाश्रीयेत । एतस्य किल तथा गृहीतं हृदयं सुधाशतकखण्डनत्वरया यथाऽयं पद्याङ्कमपि सम्यगवन्तुं नावसरं लेभे । अत एव च भगवन्नधिगम्यतां त्वयेत्यादिकं नवममपि पद्यं चतुर्थतयोपनिबबन्ध । अत्रत्यं च प्रथममपि पद्यं समालोचयमानेन भूयिष्ठमेव प्रादुष्कृतमात्मनः पाण्डित्यमिव गुणग्राहित्वमपि रत्नाकरसंपादकेन । तथा हि ।

**भगवन्सुधया सदाऽऽप्लुतं परितापैकनिवारणाश्रयम् ।**
**भवतश्चरणाम्बुजद्वयं शरणं मेऽद्य चिरेण ताम्यतः ॥**

इति भगवत्सुधाशतकस्य प्रथमं पद्यम् । अत्र च परितापैकनिवारणाश्रय-

मिति स्वयमेव कविना विवृतमित्यभिदधानः संपादको व्यधिकरणबहुव्रीहेरप्रमाणतां ब्रूते। किन्तु यः समासचक्रमप्यधीते स नूनं ब्रूयादस्ति व्यधिकरणो बहुव्रीहिरपि यस्य किलोदाहरणं चक्रपाणिरित्यादीति। स्वीकुर्वते च व्यधिकरणस्य बहुव्रीहेरलङ्घनीयत्वं साधुशब्दप्रयुक्त्यधिकरणे वामनादयः। अत एव च नायमतिमात्रं दोषास्पदमिति मे मतम्। अत्रैव चोक्तं संपादकेन "चरणाम्बुजस्य सुधाप्लुतत्ववर्णनौचित्यं च स्वयमेव सहृदयैर्विवेक्तव्यम्" इति। एतदपि व्यधिकरणबहुव्रीहिवदेवासमञ्जसमित्यभिप्रायः। किन्तु न जानीमः किमिति वाऽत्र गम्योत्प्रेक्षेति न समाहितं स्वयमेव विद्वत्तमेन संपादकेनेति। किं नोपपद्यते सुधाप्लुतत्वोत्प्रेक्षा। किमु न सुधावत्संतनोति मनसः सौहित्यं भगवतश्चरणाम्बुजद्वितयम्। अथवा विमृग्यते केलिवनं प्रविश्य क्रमेलकः कण्टकजालमेव।

एतत्पुनः काव्यस्यास्य नवमं पद्यम्—

**भगवन्नधिगम्यतां भवान्ननु वाण्या मनसाऽपि वा कथम्**
**परमः पुरुषः स्त्रिया तथा न हि षण्ढेन बताधिगम्यते॥ इति॥**

एतच्च समालोचयन्नाह रत्नाकरजनकः "न हि पुरुषः स्त्रियाऽधिगम्यते किं तर्हि पुरुषेणैव (!)" इति॥ अहो रसिकत्वं संपादकमहाभागस्य यदेवं दुरूहाण्यपि व्यङ्ग्यानि प्रकाशयति॥ न जानीमः कथं वा निष्पद्यते सोऽयमर्थः पद्यत एतस्मादिति। अत्र हि निबद्धं तथा पदं समुच्चायकमेवेति नैतद्दुर्बोधम्॥ स्त्रीपदं च स्त्रीसामान्यवाचकमपि साध्वीपरम्। परमपदस्य परत्वेन प्रमित इत्यर्थः। विशेषणं चैतत्पुरुषस्य। न हि साध्व्या परत्वेन प्रतीयमानः पुरुषोऽधिगम्यत इत्यर्थः षण्ढेनापि परमः पुरुषः न अधिगम्यते न लभ्यते॥ परमस्य पुरुषस्य षण्ढोपसर्पणासंभवात्॥ स्त्री च वाणी षण्ढं च मनः परमश्च पुरुषो भगवानिति कथमनयोरेतदधिगमो भवत्विति कवेराशयः। स चायं सांशतोऽपि दुर्बोधः। किन्तु कथं नाम विनैव जिज्ञासामवगम्यतां सोऽयम्।

**कृतिनः प्रभवन्ति वीक्षिता ननु तेनेति निशम्य ते स्तवम्।**
**स्वयमेव समेत्य वीक्षणं पतितोऽस्यास्मि चिराय हा प्रभो॥**

इत्येतदूनविंशं पद्यम्। अत्र चाभिप्रैति संपादकमहाभागः "भक्तः स्वप्रभुवीक्षणमुपेत्य पततीति धन्यं भक्तिमाहात्म्यम्" इति। नात्र प्रतिपादितं कविना यो यो भक्तः स स प्रभुवीक्षणमुपेत्य पततीति येनासौ संपादकीयाशयः

सामञ्जस्यमनुविन्देत । आत्मविषय एव ह्युक्तमेतत्कविनेति । पतितत्वं चानुभूयमानं न शक्यमपलपितुम् । भगवद्वीक्षणमप्येवम् । अत एव च प्रदर्शितोऽत्र खेदः कविना । न जानीमः क इवात्र भक्तेरपकर्ष इति । निबध्नन्ति चैवमात्मनो भक्तिरसपूरितेषु काव्येषु भूयांसः कवयः । विस्तरभयात्तु नेदानीमेवास्योदाहरणानि प्रदर्श्यन्ते ।

**अगुणं तु न कश्चन प्रभो प्रभवेत्स्तोतुमनाः कथञ्चन ।**
**इति नाथ भवानपि क्षणं सगुणत्वं सहसाऽवलम्बताम् ।**

इत्येतद्द्वादशं पद्यम् । इदं पुनः प्रभौ विधेयताकल्पनमित्यभिप्रैति विचक्षणतमः संपादकमहाभागः । कः पुनरत्र विधेयतायाः संबन्ध इति स्वयमेवैतद्विविच्यतां धीमद्भिः । अवलम्बतामिति नायमादेशो येन विधेयत्वं कल्प्येत । प्रार्थनायामपि हि लोड्भवत्येवेति किंतु विस्मृतं व्याकरणाचार्योपाधिजुषा संपादकमहाभागेन । अपि नाम संबोधयति संपादक आत्मनो विधेयान् हे नाथ हे प्रभो इत्यादि । येन नाथादिपदप्रयोगबलाद्वाऽऽज्ञायामेव लोट् प्रकल्प्येत । न खल्वनुन्मत्तः कश्चिदप्येवं प्रकल्पयितुं प्रभवेत् । सहसापदं स्तवनौत्सुक्यातिशयमभिव्यञ्जयतीति युक्तमेवैतत् । औत्सुक्यग्रस्तानां च स्थान एव कालातिपातासहिष्णुत्वम् ।

अतः परं पुनः प्रदर्शिताः केऽपि व्याकरणप्रमादाः संपादकेन किन्तु नैते संस्कृतरत्नाकर इव प्रतिपदं सुलभाः । परेषां च दोषान्प्रदर्शयितुकामेन प्रथमतस्तावदात्मन एव दोषेषु प्रदीयतां दृष्टिः संपादकमहाभागेन । रुदतं पश्येत्यस्य यथाऽशुद्धत्वं तथा तदपेक्षयाऽपि वा विद्यन्ते भूयसां संस्कृतरत्नाकरप्रयोगाणाम् । तथा हि । तृतीयाकरस्य ४।५।६ संख्यासु श्लोकबद्धे दशकुमारचरिते चिरं **प्रयुद्ध्वा** बद्धोऽभूत्कारायां सह योषिता । इत्यत्र समासेऽपि क्त्वो ल्यबभावः । एवं राजपुत्रावनर्त्स्येतां + + + । **अस्त्रक्ष्येतां** वयोऽवस्थाम् इत्यत्रापि अनर्त्स्येतामिति अस्त्रक्ष्येतामिति च कथं नाम सिध्यति रूपमेतादृगिति स्वयमेव तावद्विचार्यतां संपादकेन । एवं **स्तुवन्ती** पर्युपाचरदित्यत्र नुमपि दोषायैव । व्याजह्रे तामिति प्रसूः । इत्यत्र हरतेरात्मनेपदमपि चिन्त्यमेव । एवं तत्रैव **नीयमे**तस्त्र निर्णय इत्यत्रापि नीयमित्यस्य समर्थ्यतां साधुत्वं व्याकरणाचार्येण । एवं दुःखिनीबालायां वदनं चिरं निरीक्षन्नित्यत्रात्मनेपदं, भ्रातर्नयत्वमन् मामितो गन्तुमनुज्ञां दद्यात्तर्हि तत्रोपकारभारमिमं कदापि न विस्मरिष्यामीत्यत्र मध्यमपुरुषस्थाने प्रथमः

पुरुषः, रुधिर**धार**पूरितशरीरमित्यत्र च धाराशब्दस्य पुंस्त्वं, 'ओः' इत्यस्यासंस्कृतत्वं, **आबध्नन्कटि**मित्यत्र कटिशब्दस्य ग्राम्यत्वं, यथाहं **नीचै**र्भवामीत्यत्र नीचैरित्यस्यावाचकत्वं चेत्यादीनि दुष्परिहाराण्येव दोषजातानि। एवं वैदुष्यातिशयप्रसन्नेन भारतधर्ममहामण्डलेन विद्यावाचस्पत्युपाधिपदप्रदानेन संभावितानां मधुसूदनमैथिलानां वस्तुसमीक्षायामपि **अनेके तापमानयन्त्रा** इत्यादिषु प्रयुज्यमानो यन्त्रशब्दस्य पुंभाव एकान्तत एवाशुद्धः। एवं **तरलपदार्था**नामित्यत्र द्रवार्थे तरलपदप्रयोगोऽप्यनुचितश्च दुष्टश्च। सहकारिसम्पादकस्य मङ्गले च वसुधा**सुधानिधीशः** करुणा**महोदधीश** इत्यत्र च सुधानिधीशत्वादेरप्रसिद्धत्वं तदारोपस्य च विशेषाधायकत्वाभावः, **सुदिनं तदेव जातं ननु तद्धि सुप्रभातम्। भव लोचनातिथिस्त्वं व्रजभूमिभालबिन्दो॥** इत्यत्र च पूर्वोत्तरार्धयोः सम्बन्धाभावो बिन्दुशब्दस्य तिलकार्थेऽवाचकत्वं चेति द्रष्टव्यम्। एवं व्याकरणाचार्यस्य संपादकस्य संपादकटिप्पन्यां न्यायालयप्रधानाधीश्वर इति जस्टिस् ( हायकोर्टजज् ) इत्यत्रार्थेऽवाचकमेव। न्यायालयस्य हि प्रधानाधीश्वरो यः कोऽपि वा प्राड्विवाकः स्यात्। यस्तु प्रधानस्य न्यायालयस्य हाय्कोर्ट्संज्ञकस्याधिपतिः स एव जस्टिस्पदवाच्यत्वमासेवेत। अतश्च प्रधानपदस्य न्यायालयविशेषणत्वमत एव च पूर्वनिपात आवश्यक इति। एवं '**भारतवर्षहर्षनीवीभूता** च सेयं परिष**त्समासाद्यतां** फलमभिमतम्' इत्यत्रापि भाण्डद्रव्ये प्रयुज्यमानस्य नीवीशब्दस्य बीजार्थे प्रयोगोऽसमञ्जस एव। समासाद्यतामित्यत्र च कर्तरि यगूव्याकरणविरुद्ध एवेत्यवबोध्यम्। लोट आज्ञार्थत्वं प्रकल्प्य प्रभौ विधेयत्वमारोपयता च व्याकरणाचार्येण कथं नाम प्रयुक्त आशिष्येवायं लोडिति नैतद्विज्ञायते। साहाय्यप्राप्तिस्वीकारे च 'आशास्महे * * * * महद्यशो लप्स्यन्त इति' इत्यत्राप्याशिषि लृटः प्रयोगः समवबोधयति पाटवं व्याकरणाचार्यस्य। एवं 'हरन्ति ये **सर्वजनस्य** चेत' इत्यत्र विद्यमानं विधेयस्य सर्वस्य समासगतत्वेन गुणीभावादविमृष्टाविधेयांशत्वमपि पतत्येव गले संपादकस्येत्यवबोध्यम्। एवं सत्स्वप्यात्मना संपाद्यमाने प्रकाश्यमाने चापूर्वे संस्कृतरत्नाकरे परःशतेषु दोषेषु नांशतोऽपि प्रसरति चक्षुर्व्याकरणाचार्यस्य। प्रसरति च तत्परेषामेव काव्येष्वित्यहो परानुग्रहचिकीर्षैतस्य। अथवा 'भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो न स्वकार्ये।' वयं पुनः कीटानुविद्धस्य रत्नस्येव स्तोकतमैर्दोषैः

संस्पृष्टस्यापि काव्यस्यादरणीयतामभिप्रयन्तः समभिनन्दामो भक्तिसुधाशतकप्रणेतुः कविरत्नस्य व्यवसायम् । परं परस्तादिति शिवम् ।

भवदीयो रत्नाकरप्रणयी.
अगस्त्यः ।

---

२

श्रीः ।

भो भोश्चन्द्रिकासूनृतवादिन्योः सम्पादका आयुष्मन्तः ! सविनयं सानुरागोन्मेषं च निवेदकोऽहं नारायणशर्मा किञ्चिन्निवेदयामि तत्प्रकटीक्रियतां तावत् ।

कस्मिंश्चिद्विदुषि पुण्यपत्तने योगवासिष्ठमध्यापयति कश्चित्कार्नाटको वागत्याचिक्षेप यद्बौद्धानां खल्वयं ग्रन्थो वैदिकैः सर्वथाऽग्राह्य इति । अन्येपि च केचित्तथैव भणन्तीति श्रुतम् । अथापि श्रीमद्वाल्मीकिकृतोयं प्रबन्ध इत्यपि बहवो नैव न जानन्ति । सिध्यति चास्य तट्टीकानुसारेणार्थानुसारेणापि च वैदिकत्वम् । तथा च यदि कश्चित्सुधीरमतिरेतत्प्रमाणपुरःसरं प्रतिपादयिष्यति चन्द्रिकायां वा सूनृतवादिन्यां स्वातन्त्र्येण वा ' पो. वाई गंगापुरी जि. सातारा नारायणशास्त्री मराठे ' इत्यत्र पत्रप्रेरणेन तदानुगृहीता भविष्याम इति शिवम् ॥

वाईक्षेत्रम् ।
१०।२।५।२८

प्रियंवदो
नारायणशर्मा ।

---

## सप्रमोदमङ्गीकारः ।

वाराणसेयेन प्राकारीकम्पिन्या अधिपतिना प्रणयोपहारीकृतं नरपतिजयचर्यास्वरोदयः कर्पूरस्तवश्चेति पुस्तकद्वितयं सबहुमानमेव स्वीक्रियतेऽस्माभिः । अवश्यमिदमचिरादेव समालोचयिष्यामः ।

---

## संवादसंग्रहः ।

### संपादकीयाभिप्रायश्च ।

# NEWS AND NOTES.

यथाप्रतिज्ञं निर्वृत्तमेव मासेऽस्मिन्कलिकातायां भारतधर्ममहामण्डलस्याधिवेशनम् । युक्तरूपमेवैवं प्रतिवत्सरं तेषु तेषु जनपदेषु मण्डलस्यास्याधिवेशनमित्यस्ति नोऽभिप्रायः । महामण्डलं चैतदशेषाणामपि भारतीयानामित्यपि न किल नानुमन्यतेस्माभिः । किन्तु यथा वयं पश्यामस्तथा भूयिष्ठमेवापेक्ष्यते संस्करणमेतस्य । नास्ति चात्र तथाविधा काऽपि व्यवस्थाऽद्यापीत्यपि निवेदयन्तो विषीदामः । न किल वाग्मिप्रकाण्डानां सुधामधुरैरुपन्यासैरेव निष्पद्यते फलं किमपि । किन्तु क्रियानुष्ठानेनैव । न चाद्यापि क्रियां नाम कामपि तथाविधां महामण्डलस्य पश्यामो येन किल कृतार्थीभवेदेतत् । भारतधर्ममहामण्डलेन हि परिषदन्तरैरिवाधिवेशनतः पूर्वं प्रकाशनीया आत्मन उपक्षेपाः (ठराव) त एव च तस्मिन्नधिवेशन उपन्यसनीया विचारणीयाश्च। यथा क्रियात्मना परिणम्येरन्नेते तथाऽवश्यं प्रयतनीयं मण्डलेनेति नोऽभिप्रायः । अपगता खल्विदानीं विपन्महामण्डलस्य । भूयांसो हीदानीं साहाय्याधातार एतस्येति । उपक्षेपांश्च क्रियात्मना परिणमयितुं नियोक्तव्या काऽपि विज्ञापनसमितिः । सैव च प्रेर्या तेषु तेषु देशेषु । तत्रत्यैश्च प्रधानप्रधानैर्धार्मिकैः संभूयावबोधनीया धर्ममाहात्म्यं तत्तद्देशीया एतेन । ये खल्विदानीं विवादग्रस्ता इह विषयाः समुद्रयानविधवोद्वाहादयस्ते किलावश्यं निर्णेया अधिवेशने महामण्डलेन । परिहार्यश्च धर्मद्वेषिणां संसर्गः । स्वदेशीयान्दोलनेऽपि न किल न व्यापारणीयं मनो महामण्डलेन परन्त्ववश्यं व्यापारणीयम् । वैदेशिकानां हि वस्तूनां संग्रहे नितान्तमेव हीयते धर्मः । गवामपि हि शोणितैः संशोध्य रसं निर्मीयते शर्करा वैदेशिकैः संयोज्यते च गवामपि मेदो भूरिफेनवटिकासु (सोप्) । वसनानामपि तन्तवो मेदसैव सार्द्रीकृता आवर्त्यन्ते । भवति च मद्यसंपर्कः प्रायेण वैदेशिकेषु भेषजेषु सर्वत्र । तत्किमिव नामास्ति वैदेशिकं यन्न सनातनं धर्ममवहासयितुं प्रभवेत् । तत्किमु नावश्यं वैदेशिकोत्सारणमवश्यकर्तव्यं महाम-

